इति वाक्यविरुद्धं भूमेस्तपःकृशत्वकथनमिति चेत् । मैवम् । दृष्टान्तेनैवे-
१०।७।७ तन्निरासात् । तथा हि । पूर्वमप्राप्ततापोऽपि कामितफलप्राप्त्यर्थं विहितं स्वयमुपगम्य हि तपः करोति पुरुषस्तद्विना तदसम्भवात् । तथा तरणितापाभावेऽत्यार्द्रायां वृष्टिजलाप्लुतायां भुव्युप्तं बीजमपि नश्यत्यतो येषु क्षेत्रेषु तापापेक्षा तेषां क्षेत्राणां रसं रविकरा गृह्णन्त्येव । तदपि न स्वस्वभाववशात् किन्तूक्तदृष्टान्तन्यायेन गोपालानां विशेषतस्तदिच्छयेति मन्तव्यम् । अत एव ग्रीष्मवर्णने भुवो रसस्यैव ग्रहणमुक्तम्, न तु जलस्यापि । रसशब्देन चात्रोत्पत्तिहेतुभूतार्द्रतोच्यते । एतेन व्रजजनेच्छानुरूपमेव कार्यं भवति, नान्यदिति ज्ञापितं भवति । एतदेव हृदि कृत्वा तपसा शापितदेह इत्याद्युक्तमाचार्यैः ।

निशामुखेष्वित्यादिश्लोकपञ्चकाभासोक्तौ, एवं लोकत्रयस्येत्यादि । द्वादशमासा
इति श्रुत्युक्तैकविंशतिपदार्थयुक्तचतुष्टयं निरूप्येत्यर्थः । अग्रे च पञ्चर्तव
१०।७।८. इति श्रुत्युक्तपञ्चर्तुरूपतोच्यते । द्वादशसु मासेषु प्रत्येकं मासद्वयात्मकत्वेनर्तूनां षोढात्वे सम्भवति पञ्चत्वनिरूपणं यत् तत्तात्पर्यमाहुः ऋतवो धर्म इति । अग्निहोत्रदर्शपौर्णमासचातुर्मास्यपशुसोमा वैदिका धर्माः पञ्च । ते च 'वसन्तेऽग्नीनादधीते'त्यादिश्रुतिभिर्ऋतूनेवाधिकृत्य विहिताः । तथा चोक्तधर्मार्थमेवर्तुविभाग इति ज्ञापनाय तत्समानसंख्याका एव ते निरूप्यन्त इत्याशयेनाहुः ऋतवो धर्मे प्रतिष्ठिता इति । प्रतिष्ठितत्वं तत्रोपयुक्तत्वं तन्निमित्तत्वमिति यावत् । वसन्तादिपूपनयनाग्न्याधानज्योतिष्टोमादीनां वर्णभेदेन यागभेदेनापि विधानात्तथा । मासानां द्वादशत्वे हेतुमाहुः मासा धर्मिष्विति । धर्मिणो वैदिकधर्मकर्तारः पुरुषास्ते चोक्तधर्मसमुच्चिताः षट् भवन्ति । सकामनिष्कामभेदेन तेऽपि द्विविधा इति द्वादशविधत्वम्, द्वादशागत्वेनापि तथा । तेषां चायुः कर्मानुष्ठाने साधनम् । तच्च संवत्सरैर्मितमिति तेषामपि द्वादशमासात्मकत्वमित्याशयेनोक्तं मासा धर्मिष्विति । अग्रे जलस्थलौकस इत्यादिद्वादशसु श्लोकेषु जीवादयो द्वादश धर्मिणो ये वाच्यास्तेऽपि धर्मिपदेन सगृह्यन्ते । निशामुखेष्वित्यादिश्लोकप्रतिपाद्यानर्थान् क्रमेणाहुः अर्थः शब्द इत्यादिना । वेदो हि धर्ममूलम् । तत्र वर्णाश्रमधर्मा अर्थः, तत्प्रतिपाद्यत्वात् । अध्ययनं शब्दः, शब्दग्रहणात्मके तस्मिंस्तस्यैव मुख्यत्वात् । निषिद्धं कर्मफलम् । निषिद्धफलप्राप्तौ बाह्या सम्पत्तिस्तज्जो मदश्चागे । अत्र पञ्चस्वपि श्लोकेषु हीनदृष्टान्तोक्तितात्पर्यमाहुः पुष्टिमार्ग इति । पुष्टिमार्गे मर्यादामार्गाद्वैलक्षण्यं ज्ञापयितुं तथोक्तिरित्यर्थः । तर्हि धर्मप्रतिष्ठामाहैत्याभासः कथं संगच्छते । इत्थम् । लौकिक्यां सृष्टौ पापेन यथा पाषण्डधर्माणां प्रकाशो, न वैदिकधर्माणाम्, तथात्र प्रावृड्गद्वजधर्मरूपं यत्तमस्तदन्यत्पापम् । खद्योतप्रकाशातिरिक्तः पाषण्डधर्मप्रकाशश्च, चन्द्रादिप्रकाशातिरिक्तो वैदिकधर्मा-

प्रकाशश्च नास्तीत्यर्थः । इदं च प्रावृष शोभाकरं, तेन पुनो वैदिको धर्मोऽत्रास्तीति ज्ञापितं भवति । एतेन लीलासृष्टित्वरूपज्ञापिकेयं प्रावृडित्युक्तं भवति । अत्रत्याना क्षुद्राणामपि प्रकाशोऽधुना लीलानुपयोगिना महतामप्यप्रकाश आवरकस्य प्रकाशकत्वं चेति वैलक्षण्यं च । किञ्च । परोक्षवादेन मर्यादामार्गादन्यदपि वैलक्षण्यमत्र ज्ञाप्यते । तथा हि । खे आकाशे द्योतः प्रकाशो येषां ते तथा । गतिमतामेव च तेषां द्योतः । सोपि न दिवा, किन्तु तमस्येव । एवं सत्येतत्समानधर्मवत्यो भगवदर्थमभिसारवत्य स्वामिन्यो लक्ष्यन्ते । तासां भानं शोभा निष्प्रत्यूहं भगवत्प्राप्तिरेव । अत एव **निशामुखे**ऽभित्युक्तम् । *प्रियप्राप्त्यनन्तरमलौकिकचन्द्रस्यैव प्रकाशनात् । अन्यथा तमसा भान्तीत्येतावदेव वदेत् ।* ग्रहो ग्रहणं पाणिग्रहणं यासां तास्तथा । परोक्षवादत्वान्न पाणिपदोक्तिः । नहि तादृशं अत्यभिसारं सम्भवति । अत एव न भान्ति । *गृह्णन्तीति ग्रहास्तद्वेषणेन तन्निवारकास्तत्पुरुषा इति वा ।* एवं सति यथा मर्यादामार्गे निषिद्धेनाभिसारेण तानि पापस्य खण्डानि, 'लिङ्गं खण्डमिहोच्यत' इति वाक्यात् । तज्ज्ञापकमत्युग्रं दुःखं प्राप्नुवन्ति, न तु सुखम् । तथात्र । तेन मुक्तानामपि दुर्लभं सर्वश्रुतिमृग्यं भगवत्संगं प्राप्नुवन्तीति महदेव वैलक्षण्यमिति भाव । इदमत्राकूतम् । 'स वै पतिः स्यादकुतोभयः स्वयमि'ति 'त्वक्श्मश्रुरोमनखकेशपिनद्धे'त्यादिवाक्यैः स्त्रीणां भगवानेव पतिर्न तु जीवः । एवं सति यथा वैदिकेषु कर्मसु विष्णुयागं आसुरा यथा न जानन्ति, तथोपांशुत्वं क्रियते, उपसदोपि तथा । यद्वा, 'इदमुच्चैर्यज्ञेन चरामः तन्नोसुराः पाप्मानुविन्दन्ति । उपांशूपसदा चराम तथा नोऽसुरा पाप्मानानुवेत्स्यन्तो'ति श्रुतेः । तेषां ज्ञानमेव तद्धर्मरूपपाप्मयोजकत्वेन फलप्रतिबन्धकम् । तथा प्रकटं प्रभुसमीपगमनं एतन्मार्गानधिकृताः स्वधर्मेण फलप्रतिबन्धकरणेन योजयिष्यन्तीति तथा । गमनमेव तासां स्वधर्म इति मुख्यो धर्मो ज्ञापितो भवत्यत्रेति । यद्वा, सर्वत्र धर्मविरोधदृष्टान्तोक्तितात्पर्यमाहुः **पुष्टिमार्गे** इति । इदमत्राकूतम् । सर्वसामर्थ्यानि प्रकटीकृत्य स्वयं प्रकटे फलरूपे प्रभावितरसाधनानुष्ठानस्याप्रयोजकत्वेपि व्रजे यद्वेदाध्ययनादिकं तन्न मर्यादामार्गीयम्, किन्तु 'मन्नाथ मत्परिग्रह'मिति प्रभुवाक्यात् तेषां मर्यादामार्गीयत्वासम्भवात् पुष्टिमार्गीयम् । स्वस्त्ययनाशीर्दानादिभिस्तज्जनितसामर्थ्यस्य भगवति विनियोगात् लीलोपयोगित्वाच्च तथा । 'विप्रा मन्त्रविद' इति वाक्यात् तादृशानामेवाशिषामनिष्फलत्वात् तेषां स्वस्मिन् विनियोगस्य चिकीर्षितत्वात् तदिच्छात एव तत्करणात् पुष्टिमार्गीयत्वम् । तेन मर्यादामार्गीयो धर्मोऽत्र नास्तीति ज्ञापनाय तादृग्दृष्टान्तोक्तिरिति । अथवा, कृतयो धर्मे इति । यस्यतोयो धर्मे पुण्यधर्ममेवादिस्तस्मिन् प्रवृत्ते सम्यगयमृतु प्रवृत्त इति सर्वैः स्तुतो भवतीतीयमेवर्तुप्रतिष्ठा । तथा च तमोविशेषः खद्योतप्रकाशो ग्रहाभानं च वर्षर्तुधर्म

शोभाहेतुश्चेति स उच्यते । प्रकाशस्य ग्रहाणां च मर्यादामार्गीयत्वात्तदशोभोच्यते । मर्यादामार्गविरोधाशे च दृष्टान्तः । मण्डूकशब्दोपि वर्षर्तुशोभाकरः । ब्राह्मणास्तु मेघगर्जितं श्रुत्वानध्यायज्ञानेन वेदाध्ययनलक्षणनियमभंगे तद्वद्धा वाचः सृजन्ति, कर्मानुपयोगित्वमुभयोस्तुल्यम् । तेन वेदाध्ययनात्मकमर्यादाशोभाभाव उक्तो भवति । क्षुद्रनदीनां तथात्वमपि (तदा) तया अविहितप्रकारेण दानभोगाभ्यां मर्यादाभाव उक्तः । अग्रिमश्लोकोक्तधर्मा अपि तदा शोभायै । तृणामिति साधारणवचनात् क्षुद्रार्थजनिता लौकिकी शोभोक्तेति न मर्यादामार्गीयत्वम् । क्षेत्राण्यपि पूर्ववत् । उत्तरार्धं स्पष्टं पूर्ववत् ।

**यथा पापेने**त्यस्याभासे, **एवं भावे यो हेतु**रित्यादि । मर्यादामार्गतिरोधानमेव हेतुरिति भावः । **श्रुत्वा पर्जन्यनिनद**मित्यनेनापि कलिस्थब्राह्मणतुल्या अत्र मण्डूका एव, न तेपीति[1] ज्ञाप्यते । तेनात्र ब्राह्मणानां स्वधर्मनिष्ठत्वं ज्ञापितं भवति । **आसन्नुत्पथवाहिन्य** इत्यनेनापि क्षुद्रनदीव्यतिरिक्त उत्तरश्लोकोक्तधर्मविशिष्टः पुरुषोत्र नास्तीति ज्ञाप्यते । एतेनैं द्वयपरवशत्वाभावेनान्तरंगत्वमुक्तं भवति । **हरिता हरिभि**रित्यनेनापि तृणां क्षुद्राशयानां क्षुद्रार्थसम्पदो मदजनिका यथा, तथात्रोक्तधर्मत्रयातिरिक्ता क्षुद्रार्था न सन्तीति ज्ञाप्यते । न ह्येते मदजनकाः । तथा च 'तत आरभ्य नन्दस्ये'ति वाक्याल्लौकिकी सर्वार्थसम्पदस्ति, न तु मदजनिकेति ज्ञाप्यते । अपरञ्च । लौकिकमहारायश्रीतुल्यात्र भुवो वर्णादिशोभैव । सापि बाह्यैव । प्रभुपदाम्बुजचिह्नलीलानन्दादिरूपबाह्याभ्यन्तरशोभायास्तु दृष्टान्त एव नास्तीति भावः । क्षेत्राणीत्यनेनापि सर्वजीवनहेतुभूतान्नोत्पत्त्यनुकूलप्रयत्नवतां मुदं स्वदोषेण वस्तुतत्त्वाज्ञानेन च परद्रोहकर्तृणां तत्प्रतिबन्धकरणेन दुःखं च क्षेत्राणि जडानि यत्र ददुस्तत्र किमु वक्तव्यं गोकुले चेतनानां सर्वहितकर्तृत्वमन्येनापि परद्रोहचिन्तने तत्प्रतिबन्धकत्वमिति ज्ञाप्यते । तेनात्र पूर्णो धर्मो निरूपितो भवति । अतः सुष्ठूक्तं धर्मप्रतिष्ठामाह पञ्चभिरिति ।

**जलस्थलौकस** इत्यत्र, **मासा हि निमित्त**मित्यादि । 'द्वादश मासा' इत्यादिश्रुत्युक्तैकविंशतिप्रकारेण प्रावृडुच्यत इत्यादित्यत्रिलोकन्यायेनोक्त्वा ऋतुन्यायेन
१०।२०।१३ पञ्चभिः श्लोकैर्धर्मप्राधान्येन निरूपणं कृतम् । अधुना तु धर्मिप्राधान्येन मासमसंख्याकैः श्लोकैस्तत्क्रियत । मासा हि गर्भन्यायेन धर्मिस्वरूपविशेषसम्पत्तौ निमित्तभूताः, अतो वक्ष्यमाणजीवादयो धर्मिण एवात्र प्रधानभूता इत्यर्थः । साक्षाद्भगवत्सेवौपयिकदेहसाधनत्वं वारिमात्रस्य यत्र, तत्र किं वाच्यमन्यस्य वस्तुन इति भावः । एके नालौकिकगुणाधायकत्वमुक्तवात्र सदोषवस्तु निकटेपि न स्तीति ज्ञापयितुं दूरस्थं सिन्धुं निरू-

---

[1] न तु तेपीति मु. पा. ।

पितवान्। सिन्धुर्द्वीपमर्यादाहेतुत्वेन मर्यादामार्गीय इति तस्य क्षोभ उच्यते। एतल्लीलानुपयोगिनो महतोऽप्यनर्थपर्यवसानमेवेति च ज्ञाप्यते। अन्यथा सिन्धोर्व्रजस्थस्य निरूपणमनर्थकं स्यात्। निरूप्यते चात्र भगवदीयप्रावृष एव कार्यम्। तस्याश्चेतोऽन्यत्र प्राकट्ये प्रयोजनाभावः। एवं सति स्वाधिष्ठानत्वादाधिभौतिकप्रावृषस्तद्द्वारैव तथा[२] कारितवती यमित्यस्मिन्प्रकरणे व्रजस्थेतरस्यापि सिन्धोर्निरूपणम्। लीलारसामृतसमुद्रे जागरूकेऽन्यस्मिन् समुद्रत्वमसहमानया तया स्वप्रौढ्यैव कृतमिति ज्ञायते। तथा चास्थैर्यस्वभावा स्त्री, तादृश्या पतिश्च गोकुले नास्तीति दोषाभावो व्यज्यते। दृष्टान्तेन चात्र भगवदेकनिष्ठत्वेनोभयेषां सिद्धचित्तवृत्तिनिरोधत्वादेकत्रस्थित्या स्वस्त्रीदर्शनादावपि न क्षोभ इति व्यज्यते, तेन 'मन्यमानाः स्वपार्श्वस्था'निति न्यायः सार्वदिक इति सिद्धम्। अत्र पूर्वं वारिमात्रस्यापि मुख्यभक्तिकार्यकर्तृत्वेन भक्तिरूपत्वमुक्त्वा तदात्मिकानामेव सरितां यत् क्षोभकत्वमुक्तम्, तेन प्रावाहिकभक्तिमन्तो न लीलानिष्ठा भवन्ति, प्रभुस्वरूपनिष्ठाभावादत्सगता भवन्ति तमपि क्षोभयन्तीति ज्ञापयति। ये तु प्रभुलीलोपयिकत्वेन स्वरूपैकनिष्ठया निश्चलत्वेनात्युच्चाधिकारं प्राप्तास्ते त्वभिभावकसम्बन्धेपि नाभिभूता भवन्तीति ज्ञापयितुं गिरीनग्रे निरूपितवान्। यथा यथा वर्षधारासम्बन्धस्तथा तथा स्वगुहायां तत्स्थितप्रभौ तत्सम्बन्धा भावाः स्वेन भवन्तीति ज्ञानेनानन्दातिशय एव भवति, न तु तत्सम्बन्धजं दुःखमपीति दृष्टा तेन ज्ञाप्यते। इदमेवोक्तं **यतस्तेन्वःसारा** इत्यनेनाचार्यैः।

अग्रिमश्लोकाभासे **तेषां वर्षकृतोपद्रवमाहेति**। ननु भगवदीयप्रावृषो भक्तोपद्रवकर्तृत्वकथनमनुचितमिति चेत्। अत्रैवं ज्ञेयम्। उपद्रवो हि दुःखदः। वर्षधाराणामतादृशत्वे वक्ष्यमाणरीत्या सुखदत्वाभिमानहेतुत्वं न स्यादतः प्रभौ तन्निवारकत्वेनैव स्वस्मिन् कृतार्थताभिमानः। अत एव मूले हननमुक्तमतः सुष्ठूक्तमुपद्रवमाहेति।

१० १७ १५

'मार्गा बभूवु'रित्यनेनापि व्रजे लीलोपयोगिवर्षतो मार्गाणामेव तथात्वम्, न तु कदाचिद्वेदानामिति ज्ञाप्यते। अत एव **कालहता** इति विशेषणं मूले। यथा भगवत्प्रापका वेदा अलौकिकरीत्या तथैवैकान्ते भक्तानां भगवत्प्रापका मार्गा इति द्वयोः साम्यम्, तेन सदा व्रजलोकयातायातं यत्र स मार्गो नात्र विवक्षित इति ज्ञायते। अत एव तादृशानामेव भक्तानां तमिस्त्रायां क्वचिद्दिवापि न सन्देहः। अन्येषां तु तदज्ञानमेव। इदमेवोक्तमाचार्यैः **पूर्वं ये तेने**त्यादिना। अत एव यावत्पर्यन्तं तद्विषयकसंस्कारानुत्पत्तिस्तावत्पर्यन्तमेव सन्देहस्तदुत्पत्तौ तु तमिस्त्रायामपि न सन्देह इत्याशयेनोक्तं मूले **असं**

१० १७ १६

२ तत्र तथा मू पा।

स्त्रता इति । मार्गलोप एवेति । स्यादिति शेषः । तेन संस्कारस्यापस्यक्षमायाति । लोकबन्धुषिवयनेनापि नजे चलसौहृदा वियुत एव दृष्टाः, न त्वन्याः प्रिय इति ज्ञायते[1] । कदाचित्सत्वे हि चलत्वं सौहार्दस्य । अत्र तु प्रभ्वतिरिक्ते तदभावाप्रमो च तस्य सार्थिक-कत्वात्सौहार्दस्य चलत्वाभाव एव यतः ।

धनुर्वियतीयत्र, चक्रं निर्गुणमपीति । वृत्रवधाय भगवदावेशे जात एवेन्द्रे
वज्रसम्बन्धो जातः । वज्रेणीन्द्राविष्टभगवदायुधस्य चक्रस्यावेशः । अत
१०-१७-१८. एवायुधानामहं वज्रमित्युक्तम् । तच्च गुणातीतं सगुण इन्द्रे शोभत इत्यर्थः ।
"वज्रं निर्गुणमपी"ति पाठे स्पष्टम् ।

न रराजेत्यस्याभाष्ये, गुणेष्वत्रशिष्टमिति । तामसमित्यर्थः । अभगवदीय-
साहंकारस्य दृष्टान्तवादस्य तामसत्वम् । अत एवात्रास्य न शोभेति
१०-१७-१९. भावः । न रराजोडुप इत्यनेनाप्युक्तरीत्या यथा प्राकृतः पुरुषो न राजते,
तथात्र घनाच्छन्नो लौकिक इन्दुरिव तथा । न तु तदन्य. कोपि पुरुषोपीत्युच्यते । अत एव भगवदीयव्यतिरिक्तमित्याचार्यैरुक्तम् ।

मेघागमोत्सवानित्यत्र, पूर्वतापं दूरीकृत्य भगवदानन्ददायिभक्तजनागमदृष्टा-
न्तोक्त्या यदा दिवा परिजननिरोधतश्चिरविरहतापे सति कथञ्चिद्व्याजेन
१०-१७-२०. श्रीनन्दगेहे गमने सम्पन्ने सति वनगमने वा प्रियसङ्गे सति मेघास्तादर्शी
वृष्टिं चिरं कुर्वन्ति । यतोत्रातिविलम्बेपि स्वगृहीया नोपालभन्ते तदा तन्मेघागमस्य प्रति-नन्दनं भवत्यन्यदा तु न तथा वृष्टिं कुर्वन्तीति ज्ञाप्यते । अयमेवार्थ उक्त **एतन्निरूपणं यदर्थं** तदाहेत्याभासेन । ग्रीष्मे घर्मादिना गिरिशिखरादिष्वनावृतदेशेषु लीलाया असम्भ-वात् सर्वत्र भगवदानन्ददातृत्वेनैवैतदभिनन्दनम्, न तु वैषयिकसुखदत्वेनेति ज्ञापनाय निर्विण्णत्वमुक्तं दृष्टान्ते ।

पीत्वापः पादपा इत्यत्र, तेषां निरस्यैवेत्यारभ्य तथेत्यन्तम् । अत्रायं भावः ।
१०-१७-२१. नीरस्य जीवनत्वेपि तत्सम्पादने स्वयमशक्तास्तत्सम्बन्धघटकं ये पान्ति ते छ्र-
तिदीनास्तापतप्तास्तेभ्यो जीवनसम्पादकोयमृतुस्तेन यदेकोपजीविनो ये तेषां
तद्दातेति ये तादृशा भक्तास्तेषां भगवत्सम्बन्धजनकः, सर्वत्रैव निकुञ्जगह्वरप्रदेशजननादिति । अत एव नानामूर्तित्वं कार्यमुक्तम् । अयमेवार्थ **एतदपि निरूपण**मित्याभासेनोक्तः ।

सरःस्वियादिनापि दृष्टान्तीयधर्मसमानधर्मवन्तोत्र सारसा न त्वन्यः कोपीति ज्ञाप्यते ।

१. ज्ञप्यते मू. पा. ।

१०-१७-२२. तत्रापि सारसानामेव निरूपणेन सरसा ये भक्तास्तैः सह जलविहारदेशे
तद्रसावेशाद्दोषमप्यगणयन्तो भवन्तीति तथा। दोषागणनपूर्वैयमत्यामक्ति-
र्गोम्याणां गृहादिषु भवतीति ते दृष्टान्तीकृताः, तेनात्र [1]गृहवन्तोपि भक्ता एव, न तु प्राकृतः
कोप्यस्तीति ज्ञाप्यते। एतज्ज्ञापकोयमृतुरित्येतत्प्रस्ताव इदं निरूपितम्। अयमेवार्थ
एवदित्याभासेनोक्तः।

जलौघैरित्यनेनापि जलसेत्वतिरिक्तस्य सेतोर्न नाशो व्रजेस्तीति ज्ञाप्यते। तेन वेदसेतोः
१०-१७-२३. सातत्यं सूचितं भवति। इदमेवोक्तं तदपीत्याभासेन।

व्यमुञ्चन्नित्यत्र जलमोक्षोक्तेः पुनरुक्तिशङ्कानिरासायामृतपदं मूले। तदर्थमाहुर्हंस्ता-
दीत्यादिना। अन्यथा पूर्ववृष्टेरपि वैयर्थ्यं स्यादन्नासम्पत्तेरित्यस्यामृतत्वम्।
१०-१७-२४.
तद्धि क्षुत्कृतमृतिनिवर्तकमिति भावः। दृष्टान्तेनात्रत्यसाधारणजनानामपि
सर्वसम्पत्तिरितरापेक्षाभावश्च ज्ञाप्यते। प्रभुणैव ह्यत्र सर्वेषां सर्वसम्पत्तिः। एवं सत्युक्तरीत्या
भगवत्संमृतिरूपत्वं प्रावृषः सूचितं भवति। एतदेवोक्तमेतदपीत्याभासेन। अपरञ्च,
यथान्यप्रेरणयैव विट्पतयो ददति, न स्वतोपि, तथात्र मेघा एव, न त्वन्येपि, यतः स्वत
एव श्रीनन्दप्रभृतयः सर्वेभ्यः सर्वं ददतीत्यपि ज्ञाप्यते।

धेनवो मन्दगामिन्य इत्यस्याभासात्पूर्वं वैराग्यशक्तिर्वेति। विरक्तो हि गृहं
१०-१७-२६. हित्वा वनं प्रविशतीति वनप्रवेशमात्रसाम्येनैवमुक्तम्।

क्वचिद्वनस्पतिक्रोड इत्यस्य रामविषयत्वोक्तौ स्वाशय उद्घाटितः क्रोडे
पुनरित्यादिना। यद्यप्येवमप्येका बाललीला सम्भवति, तथापि प्रभुली-
१०-१७-२८.
लायां सङ्कोचमसहमानैरेवमुक्तम्। उपपत्तिश्चोक्ता, विशेषं च वक्ष्यति
भगवतीति।

शरद्वर्णने सा हि प्रवृत्तिरूपेत्यादि। प्रवृत्तौ मालिन्यं निवृत्तौ नैर्मल्यं भवतीत्येत-
द्धर्मसाम्यादेवमुक्तम्। व्रजेपि लीलारूपेष्वेव गोचारणकृष्यादिषु सक्ताः केचन
१०-१७-३२.
भक्ताः, सर्वनिवृत्तिपूर्वकं स्वरूपमात्रपराः केचन। तथा च विशेषणस्तत्तदुप-
योगित्वेनापि तथात्वमभिप्रेतम्। तेनात्र प्रवृत्तिनिवृत्ती लीलारूपे ज्ञेये। कारिकाप्रतिश्लोका-
र्थोक्तौ जलानामित्यारभ्य गोपिकानामित्यन्तेन [2]दशवाक्यानामर्थमुक्त्वाथचित्तस्यापी य-
नेनैकस्यार्थमुक्त्वाग्रिमवाक्यानामर्थो भगवच्छब्दार्था इति सर्वानशोभयद्दित्यनेनोक्त्वा गुणरूपत्वेनैव
चन्द्रादयो निरूपिता इत्याहुश्चन्द्रमानव इत्यादिना।

---

१. अगृहवन्त इति पाठः। तेनाग्रागृहवन्तोपि मू. पं.। २. दशवाक्यानामर्थमुक्त्वार्थं मू. पा.।

महाभूतशुद्ध्युक्तिप्रस्तावे तन्मध्यपातित्वेन द्वितीयेऽपि श्लोके अपां मलमित्युक्तमन्यथा
१० १७ ३४. पौनरुक्त्यं स्यादित्याशयेनाहुः एवं पञ्चमहाभूतानामिति ।

अखण्डमण्डलो व्योम्नी यत्र, सोऽपि चन्द्रो गोपिकाभिरिति । भगवदीय-
चन्द्रस्योडुरूपाणि स्वामिनीमनांसीति ताभिर्दृश्यमानस्तन्मन सहकृतो भवतीति
१०-१७-४४ शोभितो भवतीत्यर्थः । एवं सति मूले अखण्डमण्डलपदेन भगवदीयः स
उच्यते । शशिपदेन लौकिक इति भावः ।

अष्टादशेऽध्याये गोपानामपि सोच्यत इत्यत्र । बालका हि यत्किञ्चिदद्भुतमनुभूय
स्वस्वाभ्यन्तराभावादेवोन्माद्वशा सर्वेषामग्रे तद्वदन्ति, तथा नैतस्कं, किन्तु
१० १८०. प्रभ्वाशय या । तस्यास्तथ्यं स्वभावो य स्वमप्रमानशीलेष्वेव स्वसर्वस्वतया ज्ञातं
प्रभुचरित्रं व्यक्ततया वादयति । तादृक्वमेतास्वेवेति गोपा स्वस्वगृहे ताभ्य एवाचख्युः[1] ।
इदमेव सम्यक् व्यक्षणे । एतेन यथा दिवैतासां गुणगानं तथैतेषां निशीति ज्ञापितं भवति ।
एतच्च प्रकरणादौ ज्ञापितमिति तदन्ते च [2]ज्ञापितमन्तरङ्गक्रीडार्थं वनप्रवेशे गोपालमाहात्म्यकथनेन ।
अन्यथा वनवरदानार्थं गच्छन्यथैतान्सङ्गे न नीतवांस्तत्कार्यं वृद्धैस्तैः सहितो जातस्तद्दृश्य-
'यथ गोपैः परिवृत' इत्यनेन तथात्रापि कुर्यात्तदेतद्धृदि कृत्वोक्तं गोपानामपि सोच्यत
इत्याचार्यैः । यथा स्वामिन्यो गृहेषु स्थिता अपि वने दिवाकृतां लीलां भगवद्भावानुभावेन
[3]स्वहृदयेष्वनुभूय गायन्ति, तथैतेऽपि निशिकृतां लीलामासक्तिभरानुभावेन स्वस्वहृदयेष्वनु-
भूय गायन्ति, सा नातिगोप्येति स्फुटं स्पष्टतया नोक्ता, एतद्गानकथनेनैवोक्ता
भवति, गानहेतुभूतासक्तेस्तुल्यत्वं चास्मा च ज्ञापितैवेति तत्कार्यमपि सुतरां ज्ञापितं भवति ।
तदेतदुक्तं वर्ण्यवर्णकभेदेनेत्यनेन । वर्ण्यं वर्णनीयं रात्रिचरित्रं, वर्णका वर्णनकर्तारो
गोपा । तत्र दिवा चरित्रे स्वामिन्य इति भेदः । आसक्तिनिरूपणमुपपादयन्ति
तद्गुणेष्वित्यादिना । अत्रेदं ज्ञेयम् । गुणासक्तिस्तत्कार्येण भगवदासक्तिर्ज्ञाप्यते । आसक्तिः
प्रेमोत्तरभाविनीति तन्निरूपणेन प्रेमापि निरूपितो भवति, स चात्र श्लोकेन निरूप्यते । स
तूद्बुद्ध एवासक्तिं जनयति न तु लौकिकदर्शनकीर्तनादिकृतजनेन नोद्बुद्धो भवत्यलौकिकत्वादतः
प्रभुकृतमेव तदुच्यते[4] । फलितमाहुरासक्तया वर्णनमिति । आसक्तो सत्यामपि
यावद् भगवान् स्वयं न ज्ञापयति तावत्स्वरूपगुणलीला न ज्ञातुं शक्यन्ते यतस्तस्माद्धेतोरेकेन
श्लोकेन गर्होपीडमित्यनेन गानोपक्रमात्ते स्वरूपं सपरिकरं स्वस्वरूपज्ञानं स्फुटं यथा
भवति तथा वर्ण्यत इत्यर्थः । पूर्वं नारदब्रह्मादिकामूर्तस्वरूपज्ञानं स्वानुभावेनान्तरेव
तत्स्वरूपं गानेन स्वरूपानुभवं कारितवान्, अग्रे तु स्वलोकमप्यापिवैकुण्ठस्य

1. एवाचख्यु मु. पा. । 2. स्वगृहेष्विति पाठः । 3. स्वहृदयेष्वि-मु. पा. । 4. च तदुच्यते मु. पा. ।

बहिरनुभवात्मकक्रियया तत्फलभूतं बहिरङ्गसङ्गेन स्वरूपानन्दानुभवं कारयिष्यतीति ज्ञापनायात्र क्रियावनिरूपणमिति ज्ञेयम् । यद्वा । श्लोकपञ्चकानन्तरं गानारम्भोक्तिव्यञ्जितमर्थमाहुर्विंशान्त इति । विंशाया अन्त इत्यर्थः । सा हि पञ्चपर्वात्मिका । तथा च गानोक्तेः पूर्वश्लोकेषु तत्समानसङ्ख्यात्वात्तेषु तत्त्वं लक्ष्यते । तथा च भ्रमविद्यातोऽप्याधिक्यं, तस्या अपीदं फलमिति ज्ञाप्यत इत्याशयः । श्लोकसङ्ख्यातात्पर्यमाहुः कालाधिक इत्यादिना । द्वादशमासात्मकः कालो, द्वादशाङ्गः पुरुषश्च । इह तदधिकसङ्ख्यया गेये तदधिकत्वं ज्ञाप्यत इत्यर्थः ।

इत्थं शरत्स्वच्छजलमित्यत्र, शक्तीनां निर्भयत्वायेत्यादि । अलौकि-
१० १८ १ कत्वनित्यत्वस्वाभाविकधर्मत्वज्ञापनायैतदनभिज्ञेषु गोपनाय भगवद्भोग्यसीमन्तिनीषु शक्तिपदप्रयोगः स्वार्थे तदपेक्षारहितः फलभोगसमर्पको यथाधिकारं तत्र प्रवर्तकश्च साक्षी भवति यथा परमात्मा । तादृशान्तरङ्गत्वाद् गोपयतीति साक्षित्वमुक्तम् ।

कुसुमितेत्यत्र, धर्मं कुर्वन्नित्यादि । धर्मो हि साक्षात्परम्पराभेदेन चतुर्वर्गस्यापि
१० १८ २ साधकः । अवगाहनं च तत्र तत्र तथा तथा लीलास्फुरणार्थम् । एवं सति लोकसिद्धं कार्यान्तरं विना तत्र गमनं [1]चिरस्थित्यादिकं च लोकविरुद्धम् । लोके चिकीर्षितलीलाज्ञानं च रसविरुद्धमिति सर्वसमाधानपूर्वकं सम्पादकं गोचारणमिति भावेन धर्मत्वोक्तिः ।

तद्व्रजस्त्रिय आश्रुत्येत्यत्र, गोपिकाभिरेव श्रूयेतेति । एतदितरश्रवणाभावे
१० १८-३ प्रमाणापेक्षायामुच्यते । भगवान् हि सप्रयोजनकमेव कार्यं करोति, न त्वन्यथापि, जीववत् । अत्र च रमणार्थं भावोद्दीपनमेव प्रयोजनम् । एवं सति यासु तद्भावस्तासु तच्छ्रवणं निष्प्रयोजनकमिति प्रभुर्न करोत्येवेति मन्तव्यम् । एतेन श्रुतं सर्वैः, परन्तु स्थायिभावाभावादितरैस्तदुद्दीपनं नाभ्यधायीति निरस्तम् । सर्वज्ञस्य तादृक्कृत्यासम्भव इत्युक्तत्वात् । नादनिष्पन्नस्य स्वप्रवेशमात्रेणैव भगवदीयत्वकरणलक्षणस्वभाववत्त्वाऽनिप्रसक्तेश्च । रसस्वरूपातिरिक्तस्य वपुषोऽभावात्तद्धरणाशक्तिरसङ्गतेत्याशङ्क्य तत्तात्पर्यमाहुर्भगवांस्त्वित्यादिना । उक्तो योऽद्वयुक्तद्विविधरसात्मकः हि वपुः, रसश्च भावात्मकः । स्वप्रियान्यातिरिक्तेषु भक्तेषु[2] तादृशरसस्याप्रकटनान्नामूर्तत्वेन लोके प्रसिद्धः । वपुर्बिभ्रत्तु बहिः स्वस्वरूपं प्रकटयन् भवति । तथा च धर्मान् कुर्वन् वृन्दारण्यं प्राविशदिति । अत्रैवं ज्ञेयम् । शब्दात्मकत्वेनामूर्तत्वेन लोके प्रसिद्धा अपि[3] 'वेदा यथा मूर्तिधराः त्रिपृष्ठे' इति वाक्यात्

1. चिर मू प । 2. 'भक्तेषु' इति मूलपाठे नास्ति । 3 'अपि वेदा' 'वेदा' मू प ।

[1]सार्वदिकशास्त्रव्याख्यानपूर्विका प्राकट्यवन्तो यथा, तथा भगवतः साक्षात् सार्वदिकमेव स्वात्मकं वपुर्वृन्दारण्य एव प्रकटितवान् । तथैव प्राकट्ये न मनोमात्रभोग्यत्वम्, किन्तु प्राकट्ये सर्वेन्द्रियभोग्यत्वम् । एवं सति चक्षुर्मात्रविषयत्वे प्रियस्यादर्शने मनोमात्रविषयत्वं दुःसहमिति तदनुभवसिद्धमतो भक्तार्थं तथेति । न निवेति । स एव भगवानेव तथा । आत्मनिजवपुषो मर्ते यर्थ ।

वैजयन्तीं च मालामित्यस्याभावे, ततोऽप्यानन्दादिकमिति । विशेषस्यापि वस्तुशाखास्वज्ञानान्तादस्य नानात्वात् स्वयमेवतदुक्तम्, अन्यथापि विशेषकं च
१०-१८-५. रूपं निरूपितमिति न वदेयु । रत्नान्वेषणादिवत् गूढाभिप्रायता हेत्वन्तरमप्याहुर्यत्रेति । नादो हि रसात्मको [2]भगवत्कर्णद्वारा हृदि प्रविष्टः स एव भगवदीयसर्वेन्द्रियविषयकविविधरसभावैर्निर्भरः पयःप्रवाह इव पुनः रसपूर्णरूपो जातो, येन समानशीलव्यसनानां परस्परं तद्वर्णनरूपो बहिः प्रकटोऽभूत् । स च सार्वत्रिक इति तत्र[3] हृदयस्थितोऽधररसो मुख्याधररसस्यापि मूलेति । स सर्वासां हृदि स्थितः पर्यायेण सर्वासां हृदि प्रविष्टः । तदानिर्वचनीयोऽकटभावोदयेन साक्षात्तदनुभवयोग्यता भवतीत्यर्थः । एवं सति यावदुक्तरीत्या सोऽशो नान्तःप्रविशति तावदपि साक्षात्तद्भोगयोग्यता न भवतीति शेषग्रन्थो ज्ञेयः । एतदर्थमेवेति । रसपूरेण तद्द्वाराप्रवेशार्थमेवेत्यर्थः । अग्रेऽपि अत एवेति । यतो विहितभक्तिमतामप्ययं रस फलत्वेन प्रार्थनीय एव तिष्ठति, न तु न प्रार्थ्यत्वात् प्राप्तो भवति यतो वशीकृतस्य सम्बन्धिभक्तनिरूपणानन्तरं निरोधो निरूपित इत्यर्थः । एतस्यैव तात्पर्यान्तरमप्याहुः मृगयुवत्पन्नानामिति । भक्तानामिति शेषः । भोगो भक्तिसम्भोग इत्यर्थः । एतत्पर्यवसायीति । एतदप्राप्तौ तेषामपि मृगावुत्पत्तिर्व्यर्थेत्यर्थः । एतेनान्येषां तु मुनिकन्यायेनैव जन्मवैयर्थ्यं ज्ञापितं भवति । 'नैष्कर्म्यमप्यच्युतभाववर्जित'मित्यादिवाक्यैः । तर्हीदं फलस्य सिद्धत्वादस्मिल्लीलाद्वयं व्यर्थमित्याशङ्क्य तत्तात्पर्यमाहुः ततो विमोचनमित्यादि । ये मुक्ताः स्वान्ते स्थिता एव जीवा लीलार्थं सृष्टास्तेषां परमानुग्रहतो नित्यलीलामध्यपातिभक्तैः सहैतदमानुभवं कारयित्वा पुनः पूर्वभावं सम्पादयतीति स्कन्धद्वयेन निरूपयत इत्यर्थः । पुनः पूर्वभावसम्पत्तेरेव प्रत्यापत्तिपदार्थत्वात् । लोके एतत्सम्प्रकटनस्य तात्पर्यं वदन्त आवश्यकत्वं चाहुः अन्यथेति । अस्यैव परमपुरुषार्थत्वेन सृष्टिमध्ये यत्र कुत्रापि प्रकटनेनैव सृष्टेः सार्थकत्वम् । अन्यथा प्राणसम्बन्धरहितदेहसृष्टिरिव सा व्यर्था स्यादित्यर्थः । तद्देशानामिति । महिष्यादीनामित्यर्थः । मुख्यप्रापणार्थं वेति, मुख्यः पुरुषोत्तमः । एतासां च स एवापेक्षित इति तस्यागमनेन कथने स एव प्रापितो भवतीति तथा ।

१. त्रिपृष्ठे पार्श्वे-मू. पा. । २. घाणरूपेणेति अपाठ । ३. तत्तद्-मू. पा. ।

अक्षण्वतामित्यत्र, प्रकरणार्थविभागे द्वाभ्यां भक्तेरिति । लोके हीनानामपि
१०।८७ चरणारविन्दसम्बन्धिकुङ्कुमसम्बन्धमात्रेण लक्ष्मीसमानभाग्यवत्त्वं चरणमाहात्म्यमेव । स्पर्शमात्रेण प्रकृष्टमोदजनकत्वं च । चरणश्च भक्तिमार्गरूप इति तद्धर्मप्रकटनं भक्तिस्थापनरूपमित्यर्थ । एव तत्तात्पर्यानुक्तौ बाधकमाहुः अन्यथेति । प्रकारान्तरेण तात्पर्योक्तावित्यर्थः । पुरुषोत्तमस्य लोकेऽपि हीनाभिः स्त्रियाः सम्बन्धोक्त्या हीननायकत्वमापद्येत । श्रीपतेः कन्दाद्युपयोगश्च तथा । अतस्तत्रैव तात्पर्यमिति भावः । तथापि लोकरीत्या दूषणत्वं तस्य भवत्येवेत्यत आहु वैपरीत्यात्समाधानमिति । प्रमेयमार्गः प्रमाणमार्गाद्विपरीतो बलिष्ठश्च । अधुना च स एव प्रकटीकृत इति वस्तुस्वाभाव्यादेव तथात्वमिति न दूषणमिति भावः । अत्र मर्यादावैपरीत्यं भूषणमिति सारम् । मर्यादामार्गीयपरमोत्कर्षवद्भ्योऽप्युत्कर्षसिद्धेः सर्वमवदातम् । अन्यथा वैपरीत्यमात्रेण मार्गोत्कर्षो न सिध्येत् । मेन्द्रियाणामपि तदफलत्वे हेतुमाहुः बाधकानामिति । भगवदतिरिक्तस्य सर्वस्य बाधकत्वात्तत्त्यागे सति प्रतिबन्धकाभावेन मोक्षलक्षणं फल न भवेदित्यर्थः । मुमुक्षूणा तथात्वेपि न तथात्वमित्याशङ्कच तत्साधनमाहुः साधकानामिति । सर्वात्मभावेन भजन साधकत्वम् । यद्यपि सर्वात्मभावेन[1] सर्वत्यागोप्यन्तर्भवति, तथाप्याधुनिकाना स्वतस्तद्भावरहिताना पूर्वं बुद्धिपूर्वकस्तत्त्याग एतद्भावनं चोपदिश्यत इति पृथगुक्तिः । अत्र वयस्यैरित्यत्र, तदाधारत्वे निमित्तमितीति । गोपलीलयोरेकाधारत्वे प्रभुप्राकट्य निमित्तमिति तथे यर्थ ।

चूतप्रवालेत्यत्र, त्रयाणामन्योन्यगुणप्रधानभाव इति । स्थायिभावव्यभि-
१०।८८ चारिभावविगाढभावानामित्यर्थ ।

गोप्य किमाचरदित्यस्याभासे, तस्याधिदैविकरूपतासम्पादकमिति ।
१०।८९ कामरसो ह सहजः, वेणुनादेन सह मुखान्तःप्रविष्टः सहजं पूर्वकर्म दूरीकृत्य भगवदीयं त प्रकटित करोतीति तथा । दामोदरेत्यस्याभासे, *मर्यादायां हीनतामिति । हीनता साधनहीनता, न्यूनतामिति यावत् । तद मुङ्क्त* इत्यत्र प्रमाणमाहु सा वनस्पतीनित्यादि । 'वाग्वै देवेभ्योपाक्रामद्यज्ञायातिष्ठमाना सा वनस्पतीन्प्राविश'दिति श्रुति । सुधाभोगविषादे हेतुः सुधानधिकार इति ।

वृन्दावनं सखीत्यस्याभासः । चरणानां स्वरूपमाहेति । अत्रेदमाकूत-
१०।८१० मिति मे भाति । भगवच्चरणमाहात्म्यं सर्वश्रुतिप्रतिपादितम् । 'तदेव देवाना पादा' इत्युपक्रम्य 'तस्या भाग्यामिनन्दन'मित्यन्तेनाकम । तथा

---

1. सर्वात्मभावे गु. पा ।

चैतादृक्पदसम्बन्धात् वृन्दावनस्वरूपमुत्तमत्वेन निरूपितं भवति । तत् कथमुक्तमत्र विहारनिरूपणेन चरणानां तथेति । अत्रेदमाकूतम् । [1]लोक वेदातीतशुद्धपुष्टिमार्गीयलीला सामग्री हि नान्यत्र प्रसिद्धा । एवं सति तत्कर्तापि तथेति सिध्यति । अत एव "वृन्दावनाद् गतो दूर"मित्यग्रे वक्ष्यति । यतस्तत्र पुष्टिलीलाऽनङ्गीकारा वक्ष्यते । एवं सत्यन्वयव्यतिरेका भ्यामियं लीलात्रैवेति फलिष्यति । एवं सति यत्रैव शुद्धपुष्टयङ्गीकारस्तत्रैतच्चरणलीलेति ज्ञेयम् । अत एव पूर्वमपि 'प्रेक्ष्य त्यजन्ति गतगृहा अजगृहु' 'सहरामो व्रजस्त्रीणा चिक्रीडे जनयन् मुदम्' 'कृष्णस्य गोप्य' इत्यादिनग्रग्रे गोक्ता। कालीयशिरोनृत्ये नैतच्चरणप्राकट्यम्। तत्र पुष्टिलीलायामनङ्गीकारात् । अत एव तत्स्तुतिरपि तादृशी । अतो यत्र पुष्टि मार्गीयभक्तिमार्गप्रकटन लीलया तत्रैव चरणारविन्दाविर्भाव इति ज्ञेयम् । अत सुष्ठूक्तं [2](त्वच्) चरणानां स्वरूपमाहेति । असाधारणधर्मनिरूपणे धर्मिनिरूपणसम्पत्तिवत् । यतो लीलैव तत्परिचायिका । एवं सति 'देवाना पादा' इत्यारभ्य 'आधिदैविकानानन्दरूपा'-ऽन्त्य तेन यानि तत्र चरणरूपाण्युक्तानि तदतीतत्वमेनन्चरणयोर्ज्ञापितं भवति । उक्तेषु पुरुषोत्तमो लोकवेदप्रथितो ज्ञेय, अयं तदतीत इति ज्ञेयः ।

धन्यास्मेत्यत्र, **स दोषो न ज्ञायत** इति । दोषस्वरूपमाहुः **न ज्ञायत** इति ।
१० १८ ११ मृगीभिर्भगवत्स्वरूपं श्रुत्यादिप्रतिपाद्यत्वेन न ज्ञायत इतिलक्षणो दोष इत्यर्थः । **पूजा दधुरि**त्यत्र, तस्याश्च धारणं ततोपीति । सर्वोत्तममिति शेषः ।

**कृष्णमुखनिर्गते**त्यत्र, **मुखं वागधिपति**रित्यादि । अत्रायं भाव । पूर्वश्लोके
१० १८ १३ देवस्त्रीणां मोह एवोक्तो, वस्तुसामर्थ्यात्, न तु रसपानमपि । गवां भगवदी यत्वात् भगवत्सङ्गतत्वात् प्रियत्वाच्च रसपानमुच्यते । तत्र सुरस्त्रीणां यत्र तथात्व, तत्रैतासां पशुत्वानोयत्वेन तदसम्भावितमित्याशङ्कानिरासाय नद सामान्येन गान, किं तु [3]यथैव तासामपि रसानुभवो भवति तथा सर्वमामग्रीप्रकटनपूर्वकमिति ज्ञापनायेति । अत एवाग्रे हृदि प्राकट्य स्पर्शश्चोक्त । आधिदैविकसम्बन्धमात्रेण यत्राध्यात्मिकाधिभौति कयोरपि कार्यकरणसामर्थ्यं, तत्र साक्षादाधिदैविकस्यैव करणत्वे किं वाच्य कार्यसम्पत्ताविति वागधिपतिरित्युक्तेस्ता पर्यन्त । एतेन शब्दनिष्ठरसपानं साधनसम्पत्तिरुक्ता भवति । किञ्च । वाच्यार्थाज्ञान रसस्वरूपाज्ञानात्त कार्यासम्भव इति शङ्का कृष्णपदार्थोक्त्या निरस्ता । स्वरूपामत्वादर्थस्य स्वत एव [4]प्रकटत्वाज्ज्ञानसाधनानामनपेक्षणाद् बलवत्त्वाच्च न पशुत्वा दिक प्रतिबन्धकमत सर्वं सुवदातम् । अपरञ्च । कृष्णमुखान्निर्गतस्य तत्रापि परम्परासम्ब

१ लोकवेदातीत—मू पा । २ 'त्वच्' इति मूलपाठे नास्ति । ३ यथैतासामपि मू पा । ४ प्रकटत्वात्सदज्ञान–मू पा ।

द्रस्य पीयूषस्य यत्रैतादृशत्वं,तत्रापि पशुषु, तत्र साक्षान्मुखपानकर्तृष्वपि किं वाच्यमित्युत्कण्ठाज्ञापनायापि निर्गमनाद्युक्तिरिति ज्ञेयम्। अन्यच्च, मुखस्याग्नित्वेन साक्षात् तत्पानकर्त्रीणां कदाचित्तत्पीयूषं तापमप्युत्कटं जनयति। इदं तु तस्मान्निर्गतत्वेन सदैवानन्दजनकमेव, न तु तथा। तस्माद्भिन्नत्वेन परम्परासम्बन्धाच्च तद्धर्मासम्भवात्। अत एव साक्षात्सम्बन्धानन्तरं यादृशस्तापस्तादृशो न पूर्वम्, किन्तु सहजसम्बन्धात्तद्धर्मवत्त्वस्यापि सहजत्वात्कश्चन तापं जनयतीति ज्ञापनाय तावदुक्तमिति। **प्रतिक्षणं नूतनकर्णत्वादिति**। पुटत्वोक्त्या तत्र यथैकेन रसेन पूर्णे द्वितीयरसावकाशो न सम्भवति तथैकैकक्षणसम्बन्धिनाद्रसस्यापि[1] तत्त्वात् तेन पूर्णे पुटे द्वितीयादिक्षणसम्बन्धिनां तेषां प्रवेशासम्भवात्तत्पानार्थं द्वितीयादिपुटापेक्षावश्यकीति तथात्वम्। अन्यथा करणाभावेन नादग्रहणासम्भवाद् द्वितीयादिपानमेव न भवेत्। अत्रैव ज्ञेयम्। भगवत्सम्बन्ध्यर्थो न लौकिकेन्द्रियग्राह्यः, किन्त्वलौकिकैरेव तैः। प्रभुदित्सा च तत्र हेतुः। तथा च तथैव तावत्साधनसम्पत्तिर्भवतीति नानुपपत्तिः काचित्।

**प्रायो बताम्बेत्यत्र, सम्बोधनं दयार्थमिति**। दयया भगवन्निकट[2] एव स्थापयेदिति भावः। **तेषां शरेति**। पल्लवैरावृताङ्गत्वेनान्यदर्शनाभावाच्छरादिभयाभाव इति केचित्।
१०-१८-१४.

**नद्यस्तदेत्यत्र, [3]सर्वतत्त्वं ज्ञातवन्त इति**। भगवत्स्वरूपात्मकरसतत्त्वं ज्ञातवन्त इत्यर्थः।
१०-१८-१५.

**गा गोपकैरित्यत्र, सर्वेषामेव वनानामित्यारभ्य तत्र गच्छत इत्यन्तम्**। शुद्धिपदेनाशुद्धिनिवृत्तिरुच्यते। वस्तुतस्त्वाज्ञानहेतुभूततरुत्वस्वभावोऽशुद्धिपदार्थोऽत्र विवक्षितः। पूर्वं 'कृष्णमुखनिर्गते'त्यादिना पशुत्वेपि सति तदुल्लुप्यैतद्रसानुभाविका सामग्र्युक्तेति तत्फलरूपो गाव इति तत्सम्बन्धे सति वनस्यापि तरुत्वादिस्वभावोल्लङ्घनपूर्विका रसप्राप्तिर्भवति। गोपेषु रमितृत्वं स्पष्टम्। तदेव धर्मपदेनोच्यते। तदेतदुक्तमेतदीया शुद्धिर्धर्मश्च तत्र गच्छत इत्यनेन। गोपु तत्थुरिति पदेन क्रियानिवृत्तेरप्युक्तत्वात्तत्सम्बन्धादत्रापि तथा। वेणुस्वनयोरौदार्योक्त्या प्रासङ्गिकमिदं नादकार्यं वस्तुस्वभावजम्, न त्वेतदुद्दिश्य भगवतायं नादः कृत इति ज्ञाप्यते। प्रासङ्गिककार्यकथनेन यत्रैतेष्वेवैतादृश्यं[4] तत्रैतन्नादविषयेषु किं वाच्यमिति ज्ञाप्यते। **अतो भीता** इत्यादि। गोनिष्ठरसग्रहणार्थं बन्धनादिप्रयासं करोति तथास्मासु प्रयासं मा करोत्वित्याशयेन प्रभुप्रयासाद्भीताः स्वत एव समर्पयन्तीत्यर्थः। निदाने इति पाशनामोक्तिः।
१० १८-१६

## इति प्रमेयप्रकरणम्।

---

१. रसस्यानित्यत्वात् तेन मू. पा.। २ भगवन्निकट मू. पा.। ३. सर्वं तत्त्व मू. पा.। ४—वैतादृश मू. पा.।

## अथ साधनप्रकरणम् ।

**एकोनविंशाध्याये प्रकरणार्थनिरूपणे विद्यापञ्चकमत्रापीत्यादि** । साक्षादसम्भवे परम्परयापि भगवानेव सेव्यः । देहेन्द्रियादिकं च तदर्थमेव
१० १९.०. विनियोक्तव्यं, न स्वार्थमपीति निर्णयरूपैका । देहनिर्वाहार्थं प्राणादिधर्मनिवृत्त्यर्थमपि स्वतः सम्भवेऽपि प्रभुरेव प्रार्थनीयः, न त्वन्योऽपि । प्रभुश्च लोके नालौकिकं करोति, भगवद्भावे चानुग्रह एव नियामकः, न तु साधनमपि शास्त्रीयमिति निर्णयरूपा द्वितीया । इतरभजनं न कार्यं पारम्पर्यागतमपि[1], धर्मं भगवदिच्छायां सत्यां विसृजेतेतिरूपा तृतीया । सर्वावस्थासु हरिरेव सेव्यः, भगवांश्चाक्लिष्टकर्मा रक्षत्येव स्वानिति च तुरीया । माहात्म्यज्ञानपूर्वकः परमस्नेहो[2] भक्त्यबाधितयज्ञानं चेति पञ्चमी । एतत्पञ्चकसम्पत्तौ पूर्णो निरोधः सिद्ध इति स्वकार्ये सम्पन्ने जाते पश्चादिन्द्रादिविषयिणीं दृष्टिं कृतवान् । अत एव पश्चान्निरूपितम् । व्रजेन्द्रस्य च भगवदुत्कर्षज्ञानहेतुभूतवरुणदर्शनं कारितवान् । इदमेवोक्तं **तस्मिन् जाते सुरक्षणमित्यनेन** ।

एतन्निरूपणतात्पर्यमाहुः **अविद्याकार्येति** । अविद्या तत्कार्यं चेति ज्ञेयम् । [3]**स्त्रीपुंसेति** । तयोस्तथानिरूपणे हेतुस्तुल्यत्वादिति । अविद्यासम्बन्धाभावस्य तुल्यत्वादित्यर्थः । निरोधस्य वा ।

**एकोनविंशाध्यायार्थनिरूपणसन्दर्भे, अन्यपूर्वास्त्वन्यथैव कृतसंस्कारा** इति । अत्रेदं ज्ञेयम् । स्त्रीणां विवाह एव मुख्यः संस्कारः, समन्त्रकत्वात् ।
१०.१९.१. स च स्वर्गादिफलकाग्निहोत्रादावधिकारित्वसम्पादको लोके । प्रकृते चातथात्वाद्भगवत्सम्बन्धस्य च फलत्वेन वक्ष्यमाणत्वात् तत्र चास्याप्रयोजकत्वादेतत्कथनमत्रा[4]प्रयोजकं स्यादिति विवक्षितफलप्रयोजक एव कथन धर्मः संस्कारशब्दवाच्योऽत्र वाच्यः । स च विवाहजनित. तृतीयपुरुषार्थरसविशेषानुभवहेतुरेव । स दम्पत्योर्न सम्भवतीति यतस्तद्रसमर्यादा । अत एवान्यथैवेत्युक्तम् । भगवदीयानामन्यत्र विवाहस्यानुचितत्वात् । परन्तु तैः सह सम्बन्धाभावाद् भगवद्रसपोषकत्वाच्चास्य संस्कारत्वम् । एतेनायुक्तत्वमपि परिहृतम् । न ह्यनुचितः संस्कारो भवतीत्यनवद्यमखिलम् । किञ्च, 'लोकानुसारिणी विद्या कर्मज्ञानात्मिका पुरा निरूप्यत' इति वाक्याल्लोकानुसारेणात्र कर्म निरूप्यते, न तु भगवच्छास्त्रानुसारेण । भगवदर्थं भगवानेव सेव्य इति यतस्तत्र मर्यादा । लोके हि प्रियप्राप्त्यर्थं तदीया दूतिका प्रार्थ्यते, तथात्रापि कात्यायनी प्रार्थ्यते । लौकिकी सा यथा

---

१.—तनमपि धर्मं मू. पा । २. परम स्नेहो मू पा । ३. स्त्रीपुंसोरिति मू. पा. ।
४.—प्रयोजनक मू. पा. ।

द्रव्यादिदानेन तोष्यते, तथेयमलौकिकी यलौकिकप्रकारेणेति। अ यमजनदोषोऽपि नैव सम्भवति। भगवत्तोषहेतुस्वनपुमण्डनतुल्यकृतत्वेन रसपोषकत्वात्। विवाहिताना तु प्रौढात्वेन जातभावाङ्कुराणामनुदिनमेधमानप्रेमार्द्रप्रियेक्षणेक्षणप्ररूढतद्रसपूरमत्तत्वेनान्यस्फूर्तिरहिताना समयविशेषे समागम एवापेक्षित । स च 'निशम्य गीत'मित्यारभ्य 'न न्यवर्तन्ते'त्यन्तेन निरूपयिष्यते। एतदेवाभिसन्धायोक्त तासा त्यागोऽङ्गमिति। ननु कुमारीणा वनप्रसङ्गे प्रौढाना कथ प्रसङ्गः। इत्थम। मूले 'कुमारिका व्रत चेरु'रिति कथनेन तदितरासा व्यावृत्तिः सूच्यते। तत्र व्यावर्त्यांना स्वरूप वाच्यम्। व्यावर्त्यत्वे हेतुश्चेति युक्त तदुभयकथनमिति दिक्। एतदग्रे अन्यासामसंस्कृतानामित्यादि। आदौ भगवदर्थत्वनजक्लेशजभावविशेषलक्षणः संस्कार । अनायासेन प्राप्तात् क्लेशेन प्राप्ते स्नेहातिशयस्यानुभवसाक्षिकत्वात्। ततः 'कृष्णचेतस' इति पदोक्तानवरतानेकविधसङ्गममनोरथरूपासङ्गजनितो भावविशेषश्च स । येनाग्रे भगवत एव प्रार्थना । तत 'उपसी'त्यादिना वक्ष्यमाणप्रकारकः स । ततः प्रियागमने सति विविधरसभावगर्भपरस्परव्यवहारजप्रमोदविशेषजभावः स । ततो 'यूय विवस्त्रा' इति वाक्ये श्रुतेऽग्रिमवाक्यनिरूपितो भावविशेष स । ततो वसनदानतत्सामयिकभगवदिङ्गितादिविविधस्पर्शजनितो भावविशेष स । स एव 'दृढ प्रलब्धा' इति श्लोकेन शुकेनोक्त । अत एवामूयादिहेतुषु सत्स्वपि न तदुत्पत्ति, संस्कारस्य दोषजनकत्वात् । ततोऽग्रिमवाक्यनिरूपितस्तद्विशेषः सः । ततोऽतितुष्टप्रियावलोकनवरदानवाक्यश्रवणजसङ्गमविशेषनिश्चयजः सः । ततो गृहगमनाज्ञाजनितदुःखभोगेष्टप्राप्तिसुखभरेण च शबलो भावविशेषश्च स.। तत एकैकस्य क्षणस्यानेककल्पतुल्यत्वभान सर्वतः सङ्गोपनेन च स्वस्थैव प्रबलविप्रलम्भभावरसपूरतया कथंचिदन्ये य तत्कथामृतोद्गिरणनिर्वृत्या सततमनोरथैश्चानुसन्धानं साक्षादुपभोगमिव मन्यमाना भवतीत्यनेकविधसत्कार[1] । अन्तःसाक्षात्सम्बन्धो बहिर्न तथेति च । एव हि सत्यग्रिमभगवत्सङ्गे मुख्यरसास्वादयोग्यतैवैषा सत्कारत्वम्। एतदेवाभिसन्धायोक्त सत्कार एव निरूप्यत इति । यद्यपि भगवत्यस्ति सर्वं सामर्थ्यं तथापि तद्रसस्वरूपमेव तथेति तथोच्यत इति भावः । विद्यायामयमेव त्यागास्त्यागनिर्णय इति। अथ त्यागपदार्थ, अयमत्यागपदार्थः, स चैवं कार्यः, अ यथा न कार्य इति निर्णयरूपः अयमेव । उक्तरूपसत्कारनिरूपणलक्षण इत्यर्थ । तथाहि।, 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति श्रुत्या प्रावाहिकाश्रममर्यादाया रागाभावमात्र एव त्याग उपदिश्यते, भक्तिमार्गे न तथेति ज्ञापनाय विद्यायामिति । सात्र भक्तिमार्गीयोच्यते। अन्यत्र विद्यात्वमेव नाभिमतमिति भावायपदम् । एतासा विषयरागाभावेपि

१ विध सत्कार मू पा ।

फलरूपो भगवान् गृह एवास्तीति बहिर्गमने प्रयोजनाभावात् बाह्यो न त्यागः, किन्तु गृह एव स्थित्वा तत्प्राप्त्यनुकूलो यत्नः । यथा यथा भगवद्भावप्राचुर्यं तथा तथा बहिरङ्गसाधन त्यागोऽन्तरङ्गत्वं इतिश्च । भगवत्सङ्गमभावस्वाभाव्येन यत्त्यक्तं भवति वैदिकमपि, तद् भवतु नाम, न तु स्वबुद्धिपूर्वकः कस्यचित्त्यागः । प्रियतोषार्थमशक्यत्यागा अपि दैहिकान्तःकरणधर्मास्त्याज्याः । फलप्राप्तावपि यदा भगवदिच्छा तदैव त्यागः कार्यः, नान्यदापीति तत्र भगवत्प्रार्थनवसनत्यागाञ्जलिबन्धगृहगमनैर्निर्णीयत इति तथा । अत एवाग्रे त्याग उक्तः । उक्तरूपादन्यथा कृतस्त्यागस्त्याग एव न भवति, फलरसाननुभावकत्वादिति त्यागपदस्य तात्पर्यं ज्ञेयम् । साधनदशायां तु[1] त्यागो न युक्त इति निर्गलितोऽर्थः । एतासां फलप्राप्तावपि पूर्वोक्तसंस्काररीत्या साधनदशैव । वस्तुतस्तु फलप्राप्तिनिश्चय एवाधुना, प्राप्तिस्त्वग्रे । अतो युक्तं गृहगमनम् । ननु 'नीवीं प्रति प्रणिहिते च करे' इति न्यायेन तदा स्ववसनमोक्षार्थमपि तदनुसन्धानं कथं घटते । इत्थम् । सङ्गमभाव एव स्वस्मिन्भगवतोऽतिप्रीत्या स्वान्तरायामहिष्णुत्वभावनयेति बुध्यस्व । अत एव प्रियेण 'बद्ध्वाञ्जलिं मूर्ध्नी'ति तद्भावपरीक्षैव कृता । उक्तभावेनैव चेदेवं कृतं भविष्यति, तदा दृष्टान्तरायमपि दूरीकरिष्यन्तीति, देवहेलनहेतुकथनेन वसनत्यागे स्वारुचिः सूचिता । [2]साक्षात्तथात्व एव [3]तथाकरणं युक्तम् । न तु तथा भावनायामपीति यतो भगवदाशयः । एतदेवाभिसन्धायोक्त—अत्यागस्त्यागादुत्तम इति ज्ञापयितुं परीक्षेति । अत एव मूले 'तत्पूर्तिकामा' इत्युक्तम् । पूर्णाङ्गदृष्ट्या पूर्तिं मन्वानस्यातथात्वे सति भयपूर्तिरिति पूर्वोक्तरीत्या तत्पूर्तिकामा एव तथा कृतवत्य इत्यर्थः । वसनत्यागे शीघ्रमेव प्रियान्तिकागमनं स्वात्यागेन च विलम्बोऽभवदित्यत्युत्तमत्वे हेतुरिति ज्ञेयम् ।

एतदग्रे 'ब्राह्मणा मात्त्विका' इत्यारभ्य सेव्यत इत्यन्तम् । पद्मपुराणे गीयते । दण्डकारण्यवासिनः षोडशसहस्रमृषय स्वाश्रमान्तिकागतकोटिकन्दर्पाधिकलावण्यश्रीकोसलेन्द्र-[3] दर्शनजनितमाभावभरेण स प्रार्थितवन्तस्तदीयश्लोकम् । तदा भगवानेकपत्नीव्रतधरोऽहमधुना, भजे वो मनोरथः सम्पत्स्यत इति प्रसादं कृतवान् । त एवैता इति हृदि कृत्वोक्तं ब्राह्मणा इत्यादि । [4]आदिवाराहे 'कृष्णस्य रमणार्थं हि सहस्राणि च षोडश । गोप्यो रूपाणि चक्रुश्च तत्राक्रीडन्त केशवम् ॥' महाकूर्मे 'अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे । भर्तारं च जगद्योनिं वासुदेवमजं विभुम् ॥' अत एवैकजातीया ऋषयः षोडशसहस्राणीति पुराणान्तरादवसीयत इत्याचार्यैरुक्तम्[4] । अत एवं ज्ञेयम । पुरुषशरीरे सति स्त्रीभावोत्पत्तिरसंभाविता,

१ 'तु' इति मूलपाठे नास्ति । २. दशमापाठे ३. तथाकरणम् । ३. कोसलेन्द्र-मू पा. । ४...४. अङ्कद्वयान्तर्गत मूलपाठे टीकाया दर्शते ।

विरोधात् । एवं सत्येतानतिशुद्धान् कृतपुण्यपुञ्जान् दृष्ट्वा हरिस्तथा प्रसन्नोऽभवद्येनादेयतम-साक्षात्स्वरूपानन्ददित्साविरभूत् । तदनुभवस्तु[1] न पुंस्त्वे केवलस्त्रीत्वे वा, मानाभावात्, द्विजस्त्रीषु तथा प्रपञ्चास्वाप्रदानात्, क्षुद्रास्वपि पुलिन्दीषु दानात् । किन्त्वचिन्त्यानन्त-शक्तेर्भगवतः प्रसादरूपा अपि शक्तयो बह्व्यः सन्ति । तत्राप्यन्तरङ्गतमा सैकाऽस्ति यत्सम्बन्धिजीवे भगवत्स्वरूपानन्दानुभवोऽवश्यंभावी । सा चोक्तरूपस्त्रीत्वलक्षणधर्मरूपैव । अतस्तामेतेषु स्थापितवानिति युक्तस्तदा तेषां स भावः, तदनुरूपो देहः परमधुना सम्पन्नस्तथा भगवदिच्छा यतः । एतदेवाहुः **तेषां प्रसादरूपा शक्तिः स्त्री भवतीति** । स्त्रीत्वलक्षण-धर्मरूपापि स्त्रीरूपा कात्यायनीरूपेत्यर्थः । सैव तदर्थं फलपर्यवसानार्थं सेवत इत्यनेन सम्बध्यते । अथ तेषां स भावो भगवद्भाव इति निश्चितम् । दृष्टिद्वारा हृद्यागत एव भगवति तदुत्पत्तेः । 'रसो वै सः' इत्यादिश्रुत्या च भावरूपत्वेनैव निरूपणात् धर्मरूपत्वम्, किन्तु धर्मिरूपत्वमेवेत्याशयेन पक्षान्तरमाहुः **भगवानेवेति**[2] । सेव्यो हि सेवके स्वरूपं सम्पादयति । हृद्यागतेन भावरूपेणाऽस्माकं देहादिकमेव सम्पादितमिति तद्रूप एव भगवान्सेव्यते । बहिरस्मद्रमणार्थं प्रकटो भगवानित्येतदर्थं नायिकाभावत्वेन स्त्रीत्वमुच्यते । नैतावता काचिन्न्यूनता सगुणत्वं वेत्येतदाशङ्कानिरासायैव **गुणातीत** इत्युक्तम् । यथाब्धिजा-मृतदायकं तद्रूपम्, तथा स्वीयलोभामृतदायकमिदमिति ज्ञेयम् । एतेन 'दिव्यं ददामि ते चक्षु'रिति वाक्याद् भगवदीयचक्षुषैव यथा भगवान् दृश्यः, तथा स्त्रीत्वेनापि तादृशेनैव भगवान् भोग्य इति ज्ञापितम् । अग्रेऽग्रे **चित्तदोषस्य गतत्वादिति** । भ्रमजनको हि दोष इत्युच्यते । एतासां तु पूर्वमपि केवलं भगवदीयत्वाद् व्रताचरणहेतुभूतसंशयहेतुद्वितीयकोटिस्फूर्ति-स्तद्रूपैवेति ज्ञायते । कृष्णचेतस्त्वे भगवत्पतित्वनिश्चयेनेतरकोटिस्फूर्तिरपि गतेत्येतदभिसन्धायेद-मुक्तम् । दोषत्वमनिश्चयस्यैव । तत्र च तादृक्स्नेहो हेतुः । तादृक्स्नेहस्य । अग्रे स्नेहसत्त्वेऽपि कृष्णचेतस्त्वहेतुकृतप्रतियोग्युपपत्त्या तन्नाश एवेति सर्वं सुस्थम् । सार्वदिकत्वेऽपि पुनः कृष्णचेतस्त्वोक्त्या कश्चन विशेषो वाच्यः । व्रतानन्तरमवोक्तत्वेन तत्फलत्वमेव विशेष इत्याशयेन फलत्वमुक्तम् । अग्रे पुनः साधनोक्त्या चान्तरफलत्वमिति विवेकः । तेन पूर्वस्माद्वैलक्षण्यं प्राप्यते ।

**भूयानन्दप्लुत** इत्यत्र, फलत्वाचकत्वादित्यारभ्य कृतमित्यन्तम् । अत्रायं भावः ।

१०-१९५ पूर्वं मासव्रतसमाप्यव्रतापसंहारस्य कृतत्वात् पुनः पूजाप्रयनामभेदमिभमन्त्रकालभेदाना कथनाद्व्रतान्तरमिति प्रभुवाक्याच्चेद् व्रतान्तरमिति गम्यते । अपि च भगवत्पतित्व-मात्रार्थत्वाद् व्रतस्य कृष्णचेतस्त्वेन चान्तस्तन्निश्चयेन भगवदेकमान्यव्रताचरणात्र तदर्थं तत्करणा-

1 तदनुभवश्च मु. पा. । 2 भगवानेव वेति मु. पा. ।

संभवः । किन्त्वतःपरं बहिरपि तथात्वमेवापेक्षितम् । तत्र च तादृक्कालस्यैव निमित्तत्वमिति तदभिमानिदेवता चेयमेवेति तथात्वेनैतस्या एवात्र पूजोच्यते । अत एव भगवतैव तस्याश्चतुर्दशनामस्विदं नामोक्तम् । मन्त्रेऽपि बहिः प्रकटतया पतित्वभजनमेव प्रार्थ्यम्, अन्यथान्तस्तन्निश्चयसत्त्वेन तत्प्रार्थनानुपपन्ना स्यात् । अत एव न पूजाङ्गत्वमस्य, भिन्नविषयकत्वात् । अपरञ्च, पूर्वमन्यप्रार्थना हि कृता । तथा च तन्निर्बन्धेन तथात्वे स्वतोऽतथात्वे नीरसत्वं स्यादित्येवं प्रार्थना । अत एव न पृथग्भगवतः पूजा कृता, पतित्वेन भावनात् । न चैवं पूर्वमन्त्रस्याप्रयोजकत्वेन मन्त्रत्वानुपपत्तिः, भावकस्य तथात्वेनोत्तरमात्रप्रयोजकत्वात् । अत एव व्रतफलत्वेन कृष्णचेतस्त्वमुक्तम् । एतच्च यथा तथोपपादितम् । अस्मिन्मन्त्रेऽर्थभावनैव मुख्या, न तु जपोऽपि । अतः स नोक्तः । स्वेष्टप्रकारेण प्रियभावनमेवात्र पूजारूपम् । इदमेव भगवता 'मदर्चना'दित्यनेनोक्तमिति दिक् । किञ्च, भगवानेव वा गुणातीत इति पक्षे तु सर्वमवदातम् । अस्मिन्पक्षे उभयोरैक्येऽप्युत्तरस्या गुणविशिष्टत्वेन पूर्वस्याः सकाशाद् भेदः सिध्यति । तेन व्रतभेदेऽपि तथा । न चाचार्योक्तावान्तरफलत्वपरमफलत्वानुपपत्तिः, एककार्य एव तत्सम्भवादिति वाच्यम् । स्वामिन्युद्देश्यत्वेन फलस्य परमत्वस्य तन्नान्तरीयकफलत्वेनैतत्त्वस्य च विवक्षितत्वात् । एवं सत्येककर्मसाध्यत्वमप्रयोजकमिति ज्ञेयम् । अत एव पुरुषभेदेनावान्तरफलस्यैव परमफलत्वमपि भवति । अत एव ज्ञानमार्गीयमोक्षेच्छोर्योगेन दोषनिवर्तनं, ज्ञानेन च मोक्षसम्पादनं सङ्गच्छते ।

अत्राग्रे वयस्यैरागत इत्यस्य विवरणे, एते हि बालका इत्यारभ्य तद्भोगार्थं
१०-१९-८. चेत्यन्तम् । अत्रेदं ज्ञेयम् । भगवान्सृष्टिं कुर्वन् काँश्चन जीवान् पुंप्रकृतिकान् काँश्चन स्त्रीप्रकृतिकानसृजत् । शरीरस्यातथात्वेऽपि तेषां तेषां प्रकृतिस्तथैव भवति । पुंप्रकृतिकास्तु हरिं भजन्ते, पुरुषांशप्रवेशात् । नेतरे, केवलप्रकृत्यंशत्वात् । अत एव भगवद्भजनविधाने 'को नु राजन्निन्द्रियवा'नित्यादौ सर्वत्र पुंलिङ्गेनैवाधिकार्युक्तः । अन्यथा स्त्रीणां हरिभजनमकर्तव्यं स्यात्, अविहितत्वात् । तेन शरीरगतपुस्त्वस्त्रीत्वे अविवक्षितुक्तरूपमेव विवक्षित्वा भजनं विहितं इति मन्तव्यम् । तथा च जीवेष्वपि पुंस्त्वस्त्रीत्वे स्त इति ज्ञायते । एवं सति पूर्वोक्तेष्वेषोऽपि पुंस्त्ववन्तः स्थिताः । ते चात्यन्तं प्रिया इति तत्सम्बन्धि सर्वं प्रियमिति महानुग्रहेण तत्कर्मणामप्यङ्गीकाराच्च तत्सम्बन्धि यत् किञ्चित् तद्वैयर्थ्यं न युक्तमिति तदीयपुंस्त्वस्यैव धर्ममप्येतासु स्थापयितुं तत्र तत्रावतारितवान् । इदमेवाधिदैविकत्वम्[1] । अत एवार्पितवस्त्राद्याप्युक्तं वचनं सत्यं कृतमित्येते जानन्तीति तान् साक्षित्वेन वक्ष्यति ।

---

[1] किञ्च, शरीरसम्बन्धेनाप्य गुणानामपि सम्बन्धः स्याद्, नीरसत्वाद्वतः प्रयोजकत्वेन पूर्वसाधनानुसारेण फलं भवतीत्यत एवोक्तं सेवाफलविवरणे 'बाधकाभावः' जीव इत्यादिना दिगित्यधिकं क्वचित् ।

'तदिमे निदु रिति । स्पर्शप्रेक्षणादौ सति विकारस्य सहजस्तद्दोष, तस्मि ऽत्यपराध स्यात्, तेन चानर्थसम्बन्धः स्यादिति क्षारग मलनिवृत्तिवदतिक्रूराया स्त्रिया पूतनाया प्रथम सम्बन्ध कारितवान् । एतेषा महापुरुषत्वेपि तदा साम्यय भगवानयं वा भगवानिति भाववतीति तानन्न निनाय । अत एव तदन्त स्थितावपि नासुरभावप्रवेशः । तथा सति त सम्बन्धजक्लेशेन तपसेव तद्दोषनिवृत्तौ स्वकृते च तेषा भक्षणमिति स्वान ददानाय तत्प्राणै' सह तानप्यानीतवान् स्वस्मिन् । कुमारीपूतरी या प्रसादरूपाया शक्तेर्भगवतो वा प्रवेशेन तादृग्भोगयोग्यता पर सम्पादिता, सहज पुरुष व त्वेतासु स्थापितमेव । अ यथा 'यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घना'दिति यायेन कामभाव एव स्यात्, न तु सर्वात्मभाव, स्त्रीस्वभावस्यैव तादृश त्वात् । [1]अत एव प्रौढभावो पत्ति, येन लोकवेदनैरपेक्ष्येण भजनम् । भगवतोपि स्वच्छ दभोग[2] एतास्वेतासा च । यद्यपि भगवान् विनैव साधन सर्व कर्तु समर्थ इति शक्य वक्तु तथापि तत्तद्वस्तुमर्यादास्थापनपूर्वक भोगे महान् रस इति भगवतैव सर्वरसभोक्त्रा तथा क्रियते । अ यथा विनापि स्त्रीन स्वान द दातु समर्थ इति तथैव कुर्यात् । अत एव वात्स्यायनीयानुसारेणैव रमते । 'भगवानपि र तु मनश्चक्र' इति वक्ष्यते चोत सर्वमवदातम् ।

अत्रैवाग्रे तासा वासास्युपादायेत्यस्य विवरणे, उपादायेत्यस्यान्यत्र स्थापितमित्यर्थ इत्युक्तम् । अत्रायमाशय । वस्त्रग्रहणोक्तेरादाये येतावतैव
१०।९९ सम्भवेपि गृहीतस्य ग्रहीतृसामीप्ये अ यतः प्राप्तेपि सामीप्यवाच्युपसर्गकथन तद्विशेषाभिप्रायकमिति म तव्यम् । स एव स्वान्त स्थितेत्यादिना निरूप्यते । तच्चि त्यते । यः पृथिव्या तिष्ठ'न्नि यादिश्रुतिनिरूपितत्वेन तस्य नैसर्गिकत्वधर्म त्वाद् वस्त्रैस्तदाच्छादनकथन न युक्तिगम्यम् । भगवता सह व्यवधानासम्भवाच्च । अत एव तेषु दैत्यप्रवेशोपि तथा । प्रयोजन चाच्छादनस्य न विद्म । तदभावार्थं नीपारोहणोक्तिरपि तथा । तत्र हि स्वयमारूढः । स्वनिष्ठत्वेन स्वद्वारा जगतस्तत्सम्ब धो वाच्य । एव च सति भगवन्निष्ठत्वेनैव त प्रवेशासम्भवे तदारोहणं किमर्थम् ।

उच्यते । एके हि शास्त्रार्थत्वेन हरिं ज्ञात्वा तन्माहात्म्य च भज ते । तदपि न साक्षात्, किंतु श्रवणादिधर्मद्वारा । वस्तुतस्तु धर्मानेव भजन्त, तेन वैदिकास्ते । अन्ये च पुत्रत्वादिधर्मपुर सरमिति लौकिकधर्मद्वारा । अतस्तदनुरूपमेव फल तेभ्यो हरिर्ददाति । एता हि धर्मिमात्रे पर्यवसितमतय, न तु तद्धर्मेष्वपि । न वा धर्मद्वारा । नारदादिवद् यशोदादिवच्च । अत एव भगवताग्रे त्यज्यमवमदर्थोज्झितलोकवेदस्वा'नामिति । अत एव स्वाभाविकस्वज्ञात्यागोपि । एव स ति 'ये यथा मा प्रपद्य त' इति वाक्यादेतदनुरूपमेव

१ तत मू पा । २ स्वच्छ द भोग मू पा ।

भगवतापि कार्यम्, सर्वमर्यादा यागपूर्वकमेतत् भवनमिति । भगवतापि स्वस्वरूपमर्यादा येनदर्थं त्यक्ता । अत एव 'आ माराणापी'ति वक्ष्यते । 'माधवो हृष्य मवामि यत्र 'मद्भक्ते न जानन्ति नाहं तेभ्यो मनागपी'त्यपि भगवतोक्तम् । अ यथा अनुष्ठितनानन्तरेऽस्तद्यादान-श्रवणमनुपपन्नं स्यात् । एषा हि पुष्टिलीला । अत्र मर्यादामार्गीयत्वाय न दोषाय, किन्तु गुणाय, मार्गस्थैव तथा गत । एतच्च मयैतावदर्शनं स्यानिरितव्य यथा न भवति तथा कृदन कृतमिति वृ यस्त । 'नाहं तेभ्य' इति यास्याधथा ज्ञानं नास्विषयकम्, तथा स्वरूपमप्येतदर्थं प्रकटीभूतमेतदितरासम्बद्धमिति भगवता मह व्यवधानमपि सम्भाव्यते । अलौकिकस्थायमर्थो वचनबलेन भक्तिमार्गितात्पर्येण चावगन्तव्य । अतो न व्यापक वेन तदसम्भव शङ्कनीय । अ यथा 'हृदिस्थ कुरु करार्पम्' 'विसृजति हृदयं न यस्ये'त्यादिक मनुपपन्न स्यात् । श्रुतिरपि 'नद्दूरे तदन्तिके' इत्येतदभिप्रायिकैव । धर्मिग्राहकमानसिद्ध वस्त्वेव तथेति नानुपपत्तिः काचित् । यत्तु 'नीपारोहणानुपपत्ति'रिति तत्रोच्यते । भगवान् हि लीला कुर्वन् शास्त्रार्थमपि बोधयति । एतद्भावस्तामत्र माश्रुत्पान्नसम्भवं, अ येषा दुस्तर । तथागुरधर्मश्चैतेशत्यागस्यकः । स च भगवदधिष्ठितैरगर्भैस्तदुक्तधर्मैः श्रवणादिभिश्च शीघ्र निरस्य इति नापनार्थं यमा ऊर्ध्वनारायणयारित्येतत्तात्पर्यकाय ग्र थ इति नोक्तानुपपत्तिः । ननु सेवकेषु स नु स्वयमीश्वर कुता वस्त्राणि जगृहे । अगृहीतैव तन्निकटे[1] एव वा कथ नाकारितवास्तत्राद तासामावरणमिति । नह्यत्र वसनग्रहणमुच्यते । किन्त्वतामा साक्षाद्-भगवत्सम्बन्धे तरायस्य हरणम्, तच्च नान्यशक्यमिति वस्त्रव्याजेन तद्दूरायत्र पूर्वोक्ते स्थापितमित्यर्थ । भगवत्कृतिर्लीलाकरन् प्रतीयते, परं वस्तुतस्त्वलौकिकी । तत्त्वेन भानं च भगवद्दर्शन भवति, नाथर्वति भाव ।

एतत्प्रे हसद्भि महसत्यागैरियत्र, तेषामपि मायाधिदैविकीत्यादि । यदि

१० १९ ९ भगवान् स्वसम्बन्धि वन जानीयुस्तदा पुरुषा तत्स्वज्ञानाभावेन तद्दृष्टिपातेपि भयाभावज्ञानाभावात्[2] प्रथमाकारण एवागच्छेयु । त च तथा न ज्ञापयन्त्य यथा च ज्ञापयतीति तत्कापरस्य माया । तथा च पुरुषा तत्स्वज्ञानेन स्वस्य चान य वन तच्छङ्कया नागता इति । एतेषामाधिदैविकत्वेन भगवदिच्छानुसारित्वेन च तत्राधिदैविकत्वम् । प्रमारिच्छा तु रसविशेषार्थं परीक्षासम्पत्यर्थं चेति ।

अस्मदीयः काम इति । लोके हि क्रियाफलस्यस्वसामानाधिकरण्यवैयधिकरण्यविव

१० १९ १० क्षयैव गतिक्रियायामागमनगमनशब्दौ प्रयुज्येते वक्तृता, तथा चागच्छेत्येतावतैव स्वनिकटदेशप्राप्तावत्रेतिपद किमर्थम् । न चाभिमुख्यस्यैवार्थत्वेन देशविशेषा

---

१ तन्निकटस्थ मू पा । २ भयाभवज्ञानात् मू पा ।

कांक्षापूरकत्वेनात्रपदं सार्थकमिति वाच्यम्। 'स्वं स्वं वासः प्रगृह्यता'मिति वास्यादागमनस्य तदर्थत्वादन्यत्र स्थितो ग्रहणासम्भवात् तत एव तद्योग्यतत्प्राप्तेः। दण्डेन घटं कुर्वित्यत्र दार्ढ्यस्येव। अपरञ्च। आभिमुख्यपदार्थोपि विचारणीयः। न च सांमुख्यमात्रं सः। सम्मुखं स्थित्वा पश्चाद्गच्छ यथागच्छतीति प्रयोगापत्तेः। किन्तु वक्तृनिकटदेशसंयोगफलक-क्रियाजनकप्रयत्नः सः। इतोपि नात्रपदं सार्थकम्। न च तत्रागत इतिप्रयोगान्न तथेति वाच्यम्। तत्र प्रयोगद्वयमपि लोके दृश्यते। उक्तरूपाभिप्रायवतस्तु नियमत आङ्प्रयोगो दृश्यत इत्याङ्गोऽत्र शक्तिः। तत्रागत इत्यादौ तु वक्ष्यमाणदेशस्याभीष्टत्वेन तत्र स्वस्थितिमिव मन्यमानस्यौपचारिकः प्रयोग इति स्वयाप्युररीकर्तव्यमिति चेत्।

उच्यते। एतावत्पर्यन्तं भावनयैवैताः सर्वं कृतवत्यः, न तु[1] साक्षाद्भगवत्प्राकट्येन। तच्च साक्षात्प्राप्तावेवोचितम्, न तु प्राप्तावपि, एतदतुल्यत्वात्। जातेपि प्राकट्ये पूर्वोक्त[2]-स्थितिर्नोचितेति भावितं तत्कार्यं च त्यक्त्वा अत्र प्रकटे मय्यागत्य वासः प्रगृह्यतामित्यर्थः। किञ्च, एतावत्कालपर्यन्तं भावनयैव कामपूर्तिरासीत्। स च न मुख्य कामः, किन्तु तदाभासः। अतो मुख्यं काममेव ददामि वासोरूपेण लोके परिदृश्यमानं परं वस्तुतस्तु मदीयकामरूपमिति सामानाधिकरण्यमुक्तं कामं वास इति। अत एवाग्रे न भावनामात्रेण कामपूर्तिः साक्षात्सम्बन्धं विना। एतदेवाभिसन्धायोक्तमाचार्यैः'रसमदीय कामः' इत्यादि। तत्र भावनायां मुख्यः कामभावो न भवतीत्यर्थः। अन्यथेति। ईश्वरत्वेन तन्निमित्तकवस्त्रा-भावस्याभावे रसमर्यादाभङ्गः स्यादित्यर्थः। दत्तस्यादानं ग्रहणम्। तत्र प्रियस्य रसवशात् स्वाधीनत्वे सति तदीयस्यादत्तस्यापि रसाधिक्येन बलाद्वाससो ग्रहणं प्रकर्षः प्रशब्देन ध्वन्यत इत्यभिप्रायेणाहुः वासोपीत्यादि। अत्र स्वं मदीयं स्वं स्वकीयं यथा भवति तथा प्रगृह्यता-मित्यर्थः। एतेन भवतीषु नादेयं किञ्चिदस्तीति सूचितम्। सम्बोधनेन पूर्वं वस्त्ररहिता अपि मन्निकटे समागत्योक्तरूपवलनयो भवत्यो भवन्त्वित्यप्यर्थ सूचितः। वाच्येर्थे वाससामेतदी यत्वस्यानुक्तिसिद्धत्वेन तदुक्तिवैयर्थ्यमाशंक्येत, तदपनोदनाय तद्ध्वनितमर्थं पक्षान्तरत्वेनाहुः अस्मदीयाभिरित्यादिना। अधुना वीना वस्त्रत्कामभावमपि त्यक्त्वा विहरन्ति, मुदेति-पदाद्भावनयैव पूर्णमनोरथा इति ज्ञापनात्। तथा च सम्बोधनेन स्वातन्त्र्याभावात् स्वानधीनत्वेन[3] स्वकीयत्वं ध्वन्यते, तेन ग्रहणेधिकार उक्तो भवति, स्वपदाभ्यां च पूर्वसिद्धं स्वत्वमनूद्यत इति कृपि वदशायां प्रार्थनाहेतुर्य. कामः पूर्वं इहैव या पूर्वकालीनो यः स ध्वन्यते। एतदेवोक्तमस्मदीयाभिरेव पूर्वपरिग्रहः कर्तव्य इत्यनेन। पूर्वपरिग्रहत्यक्तार्थपरिग्रह इत्यर्थः। अन्यथेति। अस्माभिर्नवलेनैतावत्साधितम्। तेनैव अन्यदपि साधयिष्यत इति

१. न तु तत्र साक्षाद् मू. पा.। २. पूर्वोक्ते मू पा.। ३. स्वाधीनत्वेन मू पा.।

भावे सति भगवदधीनत्वाभावेनोक्तरूपाधिकाराभावात् कर्मफलस्यानपत्वेन तथाफलत्वेन दत्तवस्त्र-परिग्रहोऽनिष्टः स्यात् । सर्वभावप्रपत्त्यैकलभ्यो रसो हीष्टः । तदितरोऽनिष्टः स स्यादित्यर्थः । एतेन पूर्वं स्वं स्वकीयमेवाधुना त्यागात् पुनः स्वं यथा भवति तथा गृह्यतामित्यप्यर्थो मूलस्य ध्वन्यते । पूर्ववत् प्रचुरभावयुक्ता भवन्त्विति भावः । भगवतो हि स एवेष्टः । अन्यथा रसाभासः स्यात् । एतदेवान्यथानिष्टः स्यादित्यनेनोच्यते । अथवा । वीप्सया नायिकाभेदेन यादृश्या यादृशो भावस्तादृशो तादृशमेव तं गृह्णातु, न विजातीयमित्यर्थो ज्ञाप्यते । विजातीयग्रहणे रसपोषो न स्यात् । एतदेवोक्तमन्यथेत्यादिना । उच्छलिते रसे त्वन्यथा व्यवस्थेति न काचिदनुपपत्तिः । तदर्थमेवैतत्करणं यत । यद्वा । त्यागात्याग-निर्णयरूपवादेतत्प्रकरणस्य तन्निर्णयोऽप्यनेन ध्वन्यत इत्याहुः **अस्मदीयाभिरित्यादि** । अत्रायमाशयः । अधुनैतासां भाव्यवस्थान्तरस्फूर्तौ हि स्वरूपानुसन्धानपूर्वकं वसनस्थापनं तीरे स्यात्, किन्तु रसभरवशेनेयमेवावस्था मे सार्वदिकी कदाचित् तदपेक्षायां प्रियस्योत्तरीयमेव ग्रहीष्य इति प्रत्येकं भावोत्पत्तेर्वसनानां त्याग एव कृतः, न तु स्थापनमात्रम् । एवं सति त्यक्तार्थपरिग्रहत्वेन तद्ग्रहणं न युक्तं स्यादिति । तन्निषेधकवाक्यस्य मर्यादामार्गीयपरत्वात् धर्मिपराणां वचनानधीनत्वेन केवलं तदधीनत्वात् तद्दत्तस्य त्यक्तस्यापि ग्रहणं युक्तमेवेति । अन्यथा मर्यादामार्गीयत्वमित्यर्थः.[1] । किञ्च, केवलवस्त्राणां त्यागोऽभूत्, भगवांस्त्वधुना स्वकीय[2]-कामरूपाणि तानि ददातीति त्यक्तार्थतापि नात्र । आचार्यैस्तु लोकदृष्टिमपेक्ष्य समाहितम्, त्यागनिर्णयकथनार्थं च । वा पूर्वपरिग्रह इत्यत्र नञ्प्रश्लेषो वा कार्यः । यद्वा । पूर्वपदेन पूर्वः पुरुषाख्यो धर्म उच्यते । तदभावे सर्वभावप्रपत्तिर्न स्यादित्युक्तम् । तेन पूर्वं दण्डकारण्ये पुरुषा एव गोकुले समागत्य स्त्रियो जाता इति पूर्वसम्बन्धं स्वस्य स्मारयन्त्यनागत्यावस्था इत्यनेन सम्बोध्य कर्तव्यमाह । सः [3]तच्छब्दस्य पूर्वपरामर्शित्वेन पूर्वः पुरुषाख्यो धर्मः प्रगृह्यतामिति । अत्र स्वशब्दस्याव्ययरूपस्य कथनात् तद्विशेषणत्वम् । ध्वनितेऽर्थे लिङ्गादेरविवक्षितत्वेनापि तथा । क्रियाविशेषणं वा । सर्वभावप्रपन्नाभ्य एव स्वानन्दं शृङ्गाररसरीत्यैव दास्यति । स च मानखण्डितादिभावैरेव पूर्णो भवति । सर्वात्मभावस्फूर्तौ च न तत्सम्भव इति कदाचित् तत्सम्भवः कदाचिन्नेति विकल्पेन गृह्यतामित्याह वाशब्देन । विसर्गलोपश्छान्दस इति मूले ध्वनितोऽर्थो ज्ञेयः ।

**माऽनयं भोः कृथा** इति श्लोकस्य विवरणे उक्ता राजसादयो ये गुणास्ते स्वा-
१० १२ १५ मिनीभावानामन्योन्यं वैजात्यं ज्ञापयितुं दृष्टान्तरीत्या, न तु प्राकृततद्रूपाभिप्रायेण । अथवा 'न तदस्ति पृथिव्यां वा' इति वाक्याद् गुणरहितं वस्तु त्रिलोक्यां न

---

१. मार्गीयत्व इत्यर्थः । मु. पा. । २. स्वीय—मू. पा. । ३. 'वास इति पदे वा इति स इति पदच्छेदेन व्याख्यानं ज्ञेयम्' । एतट्टिप्पणं मूले नास्ति ।

सम्भवतीति प्रह्विलादिन प्रत्युच्यते । अत्रैते भावा एव तद्रूपाः, न तु प्राकृता अत्र सन्तीति । एतेनात्र प्रकृतिरपि भिन्नैवेति ज्ञाप्यते । सा च स्थायिभावरूपैवेति ज्ञेयम् । अत एव भगवता पृथिव्यादय उक्ताः, न तु सामान्यतः । लीलाया अलौकिकत्वेनाजन्यत्वेन च पृथिव्यादिमध्यपातित्वाभावाद् ब्रह्मवत् । एतद्विद्वन्मण्डने प्रपञ्चितमस्माभि ।

अत्रैव ततो जलाशयादित्यत्र मूले तत इत्यानन्तर्यमात्रमुक्तम्, न तु श्रुत्वेत्यादिज्ञानवाचकम् । तत उक्त वाक्यार्थापरिज्ञानेपीति । स चेश्वरवाक्यमेव
१० १९-१७ कर्तव्यमित्यादिनोक्तः । ईश्वरवाक्येनेत्यादि । माऽनयं भोः कृथा इति श्लोकविवरणे ये राजसराजसादयो गुणा उक्तास्तद्भावशात् तादृशवचनान्येवोक्तवत्यो, न त्वागता, तदा प्रभुणा दासीत्वादेवागन्तव्यमित्यनुक्त्वा, यदी युक्त यत्, तेनानागमने दासीत्वमपि न सेत्स्यतीति ज्ञापितम् । तच्चानिष्टमिति भयरस उत्पन्न । सर्वान् भावास्तिरोहितानकरोदितीश्वरवाक्येन तेषां तिरोभावे सर्वासामेकरूपत्वेनैकेनैव रूपेण सर्वा आगता इत्यर्थ । नन्वत्यन्ततामस्य इति । परपुरुषत्वादा मानं बालेभ्यो न दर्शयिष्यामो, भगवदुक्ता अपीत्याग्रहस्तमःशब्देनोच्यते, बालेषु स्वधर्मत्वेन पुरुषान्तरत्वाभावेपि तथात्वेनाज्ञानात् । एवं सति भगवद्वाक्यादागमनं न सम्भाव्यत इति कथमागता इत्यर्थः । एतत्समाधानेऽयमाशयः । स्वनिकटे समानेयाः, सर्वथा परीक्षार्थं बालकस्वरूप च न ज्ञापनीयम् । एवं सति तदुभयसम्पत्यर्थं लीलोपयोग्याधिदैविकः कालो मुख्य सेवकः स्वधर्मं शीतमन्तर्बहिश्चाविष्कारं जलान्तःस्थितौ बाधकम् । अत एवैतः पूर्वं जलविहारेपि न शीतमभूत् । तेन तत्र स्थातुमशक्ताः [1]कशीननेत्या पूर्वोक्ताग्रहस्यापि तिरोधानादागता इति । एतदेवोक्त स्वभावाधीना एवेत्यनेन । नन्वेवं कालाधीनत्वं स्यान्न भगवदधीनत्वमिति चेत् । स्यादेव यद्याज्ञया नागत स्यात् । न त्वेवम् । पूर्वं स्वोक्तयोः पश्चाद् भगवदनुदितयाऽस्योक्तकारित्वयाः सिद्ध्यर्थमेवागमनात्, यतो भगवता तथैवोक्तम्, यदि पदेनाधुनानागमने पूर्वोक्त द्वयमपि न सेत्स्यतीति ज्ञापनात् । अतोऽपि भगवदुक्तकरणं सम्पन्नमिति मत्वा यत्रागमन तत्रैव सामयिकोक्तकरणं स्वत.सिद्धमिति बुध्यस्व । शीतोक्तिरुक्ताग्रहदार्ढ्यज्ञापनायेति ज्ञेयम् । एवंभूता अपि पूर्वं न निर्गता इति । तत. एवभूतोत्वत्यनन्तर त्वागता एवेत्यर्थ । यदीति पद श्रुत्वा स्वाग्रहविपरीत प्रियाग्रह ज्ञात्वा स्वेष्टप्रतिबन्धं च ज्ञात्वा तथा चक्रु । तत्रापि स्वप्रधानाङ्गमाच्छाद्यैवेति निगूढाशय । तेन कश्चन स्वाग्रहमत्यस्यैवागता इति स्वभावाधीना एवेत्युक्तमाचार्यैः। भगवदनभिमतकरण कालधर्मा बाधन्त इत्यपि ज्ञापनाय शीतोक्तिर्ज्ञेया । सम्भवदुक्तिः पूर्वमस्माभिरुक्त आशय इति सर्वमवदातम् । ज्ञानदृष्टिः सर्वत्र न व्याप्नोत्यादि । अत्रेदं ज्ञेयम् । भगवत

---

[1] कर्षणेनेत्या मू पा ।

एतत्सर्वाङ्गदिदृक्षातिप्रचुरेऽपि तत्प्रतिघाते रोषोऽभवदिति तद्भाववर्णनं कृतमतस्त्वयाज्ञया इत्यनेन। मध्ये प्रसादितत्वोक्त्यायमर्थो लभ्यते । यत्र पाण्यन्तरायमपि न सहते, तत्र वस्त्राणि कथं ददातीतिशङ्काऽभावाय वृक्षस्कन्धनिधानतात्पर्यमाहुः तासामावरणानीत्यादि । अत्रायमाशयः । पूर्वं भगवदन्तरायत्वेनान्यत्र स्थापितमि युक्तम् । अत परं यथा वैष्णवसङ्गो भगवत्प्रापकस्तथैतद्वस्त्राणामपीति वृक्षस्कन्धे निधानेन तादृग्धर्मयुक्तान् कृत्वेत्यर्थः । तेषां परार्थता भगवतैवानुपद वक्ष्यते यत इति भावः । एतेषां तत्प्रापकत्व रसोद्बोधकत्वेन । तेन तादृक्संस्थानविशेषकृतिरपि लक्ष्यते । तदानीं प्रीतियुक्तत्वे विशेषहेत्वपेक्षायां तमाहुः तासां निदानं श्रुत्वेति । वयस्यसहिते त्वयि सति वाक्यादनागमनमागमन वा साध्वसाधु वेति वयं न विद्मः । केवल त्वदीयाश्च वयम्, अत किं कृते किं मनुते भवानिति शङ्कितहृदयासु यथोचिता रक्षा त्वयैव कार्येत्यादिरूपं श्रुत्वान्यत्रं ज्ञात्वा तथा जात इत्यर्थः । यद्वा निदानं निजं स्वरूपमित्यर्थः । तथा च पद्मिनीनां नीवीषु पद्मगन्धो भवतीति यदा वृक्षस्कन्धे विविच्य स्थापितास्तास्तदा मधुपकुलाकुलतया तदीयझङ्कृतिश्रवणमेव निदानश्रवणम्, तेन स्वानुरूपनायिकोत्तमत्वज्ञानेन रसभावोद्बोधात्तासु प्रीतोऽभवदित्यर्थः ।

बद्ध्वाञ्जलिमित्यत्र । क्रियाशक्तिर्बाहू इत्यर्थः । क्रियामूलस्यापीति । बाहुमूलस्यापीत्यर्थः । वस्त्रदाने लोके वेदे च मुक्तेरेव परमफलत्वप्रसिद्धिरिति
१०·१९·१९ तस्या भक्तिमार्गेऽन्यत्व प्रकटीकर्तुमाहुः ननु तर्हि मुक्तिमेव दद्यादित्यादि ।
सर्वदु खाभावरूपत्वेन मुक्तेरुक्तरूपकरणत्वस्य तद्वैवोपपत्तेरिति भावः । एतद्दाने हेतुत्वेन विशेषणव्याख्यानेन येषु नायं तोषस्तेभ्य एव मुक्तिदानम्, न त्वेवंभूतेष्वपीति भावः सूचित । तथा च तदल्पत्व स्पष्टमेव ।

इदं प्रलब्धा इत्यत्र, लौकिकदृष्ट्यभावस्याविचार्यत्वे बाधकमाहुः अन्यथेति । असूयाहेतुत्वेन लोके ये धर्माः प्रसिद्धास्तेष्वनुभूयमानेष्वपि तदसम्भवश्चेत्,
१०·१९·२२ तदा सिद्धमलौकिकत्व भावस्येति तात्पर्येण मूले ते निरूपिता । न च स्नेहमात्रमेतेनोक्तमिति वाच्यम्, तद्वतीनामपि खण्डिताकलहान्तरितादीनामसूयासम्भवात्, ईश्वरेऽसूयानिष्टहेतुरिति शास्त्रज्ञानवतां स्नेहरहितानामपि तदसम्भवाच्च । न च खण्डितादीनां सङ्गाभावात्तथात्वमत एवात्राप्यन्ते विशेषणं तयेति वाच्यम् । यद्वा प्रलम्भनादिस्तदा वक्ष्यमाणसङ्गाभावात् तत्सम्भवात् खण्डितादीना प्रियं प्रत्येव तथोक्तेः सङ्गाभावाभावश्च । न च पूर्वकालीनः स तथा, उत्तरेण सङ्गेन तद्बाधात् । न च पूर्वकालाधिकरणकसङ्गाभावस्तदाप्यस्ति, तस्यात्यन्ताभावरूपत्वादिशिष्टाप्रसिद्धावपि खण्डश प्रसिद्धेरिति वाच्यम्, उत्तरकालीनातिरिक्तस्य सङ्गस्य प्रतियोगित्वे मानाभावात् गौरवाच्चात्यन्ताभावत्वाभावात् ।

न चैतेन दोषमात्राभाव उपलक्ष्यते एतास्विति वाच्यम्, दोषाणां हि मूलमभिमानस्तदभावश्चाञ्जलिबन्धपर्यन्ताज्ञाकरणेनैवोक्त इति पुनस्तदुक्तिवैयर्थ्यापत्तेः। तदेतदुक्तं **सर्वथा निरभिमानानामि**त्यनेन। एवं च सति सङ्गे सत्यपि लौकिकरीत्या भावे सत्यस्या भवतीति तदभावोक्त्या लौकिकदृढचभाव एवोक्तो भवति। स च न रूक्षः, किन्तु महारस इति ज्ञापनाय प्रत्येकविशेषणनिर्धारणीयार्थानाहुर्**भगवद्वचने** चेत्यादिना। एतासामेतादृशो विशुद्धभावो येन वसनद्वारापि सम्बन्धं साक्षादिवान्वभवन्निति मूले प्रियसङ्गनिर्वृता इत्यनेनोक्त तदभावहेतुभूतेन। अन्यथा हेतुत्वेनोक्तदृढप्रलम्भाद्यव्यवहितोत्तरक्षणेऽमूयोत्पत्तौ प्रतिबन्धकाभावादुक्तानुपपत्तिरिति भावः।

**परिधाये**त्यस्य विवरणे, **रसाकारा जाता इति**। रसः शृङ्गारस, स हि स्व-
१०-१९-२३. योग्येष्वेवाङ्गेषु प्रकटीभवतीति स्वशास्त्रे सिद्ध इत्यङ्गानामतादृक्त्वे रसाश्रयत्वमपि न स्यादिति तादृशत्वमत्र जातमिति ज्ञापनायैव धनुःकवचादिसम्पन्नाः रणार्थं सज्जिता वीरा प्रेष्ठसंगमसज्जिता जाता इत्युक्तमित्यर्थः। वाससां कामरूपत्वात् तदनन्तर तथात्वमुक्तम्। ननु कुमारीणां तदैवोक्तरूपत्वमनुपपन्नमित्याशङ्कय विपक्षे बाधकमाहुः **अन्यथे**ति। तादृग्वयोङ्गादिसम्पत्त्यभावे कामशास्त्रोक्तनखदन्तताडनादिव्यापारोद्बोधनीयरसानामाश्रयाभावः स्यादित्यर्थः। तथाच मूलोक्तसंगमपदार्थबाधप्रसंग इति भावः। उक्ताभावेपि यथाकथञ्चित्संगमे पूर्णरसाभावेन क्षीणरसत्वं वा स्यादित्यर्थः। पूर्वं दारिकात्वकुमारीत्वोक्तयाधुना च रसाकरत्वनिरूपणेन भगवानेव गुणातीत इत्यादिनोक्तभगवत्स्वरूपात्मिकैवासा देहेन्द्रियान्तःकरणादिरूपा सामग्रीति ज्ञाप्यते। कालक्रमं विनैव तदैव तथात्वादिति।

**लज्जायितेक्षणा** इत्यत्र, **पूर्वस्वदोषे**ति। प्रथमाकारणेऽनागमनं दोष। वस्तुतस्त्वधुना प्रियप्रकटितरसभरभरितत्वेन तदन्यानुसन्धानमसम्भावितमिति तत्समयोचित भावदृष्टिरेवैषेत्याहुः **तदेयं भावदृष्टि**रिति।

**सङ्कल्पो विदित** इत्यत्र, भवतीनामित्यस्य विवृति **सर्वासामेवाज्ञातस्वरू-**
**पाणा**मिति। स्वरूपतो धर्मतश्चेति द्वेधा वेदनं सम्भवति, इह तु भवतीनां
१०-१९-२५ सङ्कल्प इति पदन्यासेन सङ्कल्पस्यैव वेदनम्, न तु स्वरूपस्यापीति ज्ञाप्यते। स्वरूपस्य रसात्मकत्वेनानुभवैकवेद्यत्वादग्रे वेदनं भावि। संप्रति तु सङ्कल्प एव विदित इति रसोक्तिः। 'लोकवत्तु लीलाकैवल्य'मिति न्यायादसमर्यादयैव भगवानेतत्स्वरूपानुभव करिष्यतीत्याशयेनैवमुक्तम्।

**मयानुमोदित** इत्यत्र, **अनेन कार्याधीनत्वादित्यादि** । अमावितिपदेनोक्तोऽर्थः कार्यपदेनोच्यते । फल च भगवद्रमणम् । त चैतन्निवेदितदेहेन्द्रियादिभोगरूपमेव । तच्चोक्तकार्यमध्यपाति । कार्यं चैतत्कर्तृकत्वेनैतदधीनमिति तथा । असाविति पदोक्तपूजाया भगवति विविधरसभावजनकत्वेन तत्पूर्वकस्मितविलासेक्षणादिभिरनङ्गावः पूर्यते, नान्यथेति परस्पर भोग एवाद्भुत सम्पद्यते । इद चोक्तपूजाम यथाति, पूज्यकर्तृकनिवेदितभोगस्य पूजामध्यपातित्वात् । एतस्या एव रसमर्यादाक्रमेण पुष्टाया अग्रिमफलसाधकत्वमिति सुष्ठूक्त **गोपिकाधीनमेव फलमिति** । अत एवाधुना न रमणम् । तत्र कृष्णचेतस्त्वेन मानसनिश्चये सत्यपि 'यदि मे दास्य' इति वचनेन 'यूय विदग्धा' इत्यादिवचनेन च जनितो यः फले सशय सोपि निवारित इत्यर्थः ।

अत्रैव **यातावला** इत्यस्य विवरणे, **यथा भूमिरित्यादि** । अस्य कामस्य का
१० १९ २७ मा तरानुत्पादकत्वेन[1] दृष्टान्तीकृता धाना इति तद् यज्ञितोऽर्थोऽत्रोच्यते । ते हि पूर्वावस्थाया भूमावुप्ता अङ्कुरोत्पादकाः । तत्र न हि विजातीयाङ्कुरानुत्पत्त्यर्थं रक्षार्थं भूर यत्र नीयते, कि तु तदुत्पादका भौमा दोषा एव निरस्यन्ते । प्रकृते तु भगवानस्मानत पर यत्र कुत्रापि स्वसङ्ग एव नयत्विति स्वामिनीना हृदयम् । तच्चाधुना रसपोषाय लौकिकविरोधाद्रसाभासम्भवाच्च न कर्तव्यमत इयमाज्ञेति । यद्वा । भौमा एव भूसम्बन्धिनो हृलादय एव पर भूसमीप नीयन्त इत्यर्थः । तेन यथासम्भव भवतीरुद्दिश्य सन्ध्यादिप्रक्रमेव व्रजमागमिष्य इति भावः ।

**मयेमा रस्ययेत्यत्र, रमणसहितास्ता इति** । आसा क्षपाणामेत मात्रभोगार्थमेवाविर्भावादेतज्ज्ञापको धर्मविशेष क्षपासु वर्तत इति तद्दर्शनेन स्वरमणनिश्चयोऽभूदित्याशयेनेदमुक्तमिति ज्ञेयम् । अत्रैवोपसहारे **तासामर्थभक्तिरिति** । अङ्गसङ्गाभावादर्थ वम् ।

अत्रैवाग्रिमप्रकरणार्थनिरूपणे, अन्यथा **गोपालानामनर्थपर्यवसान स्यादिति** ।
१० १९ २९ अत्राथ गोपैरित्यनेनोक्ता गोपाला उच्यन्ते, न तु पूर्वोक्ता, विनियुक्तत्वात् । गोपपदेनैव च तद्व्यावृत्तिः, तेषु तदभावात् । अत एव मूले तेषु वयस्यत्वादिकमेवोक्तम्, न तु गोपत्वमपि । स्तोकादयो यदि व्रजस्थ वस्तुमात्र न केवलं भगवदर्थं किन्त्वन्यार्थमपीति जानीयुस्तदा पूर्ववृत्तान्त श्रुत्वा प्रभौ दोषारोप कुर्युः । स एव चानर्थरूपः । यदि तदर्थमेव सर्वमिति जानीयुस्तदोक्तवैपरीत्यमित्यर्थः ।

---

1—नुपदकत्वे मू पा ।

अत्रैव **वृन्दावनाद् गतो दूरमित्यस्य** विवरणे, **वृन्दावनस्य स्त्रीप्राधान्यादित्यादि।**

१०-१९-२९. अत्रोपकान्तत्वात् परार्थताज्ञानमेव ज्ञानपदेनोच्यते । भगवदीयव्रजस्त्रीणां तु रसभावभेदेनासमदर्थमेव प्रभुप्राकट्यमिति ज्ञानं दृढम् । अत एव वक्ष्यन्ति च 'व्यक्तं भवान् व्रजजनार्तिहरोऽभिजात' इति । एवं सति तद्वने तद्विपरीतज्ञानं न सम्भवतीत्यर्थः । भगवदतिरिक्ते वस्तुनि तूपेक्षेति तस्मिन् [1]तदर्थत्वात्तदर्थत्वज्ञाने अपि न सम्भवत इति भावः ।

**निदाघार्कातप** इत्यत्र, **व्रजजातापेक्षयेति** । भगवदन्तिकागमने निवारकत्वाद् वृक्षाणां

१०-१९-३०. चैतद्गमणानुकूलत्वात्तथा त्वमिति भाव । यद्वा, व्रजजाता वृक्षा एवात्रोच्यन्ते । तेषु लीलाविशेषानुपयोगात्तथात्वम् ।

**परार्थैकान्तजीवनानित्यत्र, परार्थजीवनानित्येतावतैव** चारितार्थ्येऽपि यदे-

१०-१९-३२. कान्तपदयोः कथनं तत्तात्पर्यमाहुः **तदा अन्ते धर्म** इत्यादि । जीवनस्य परार्थसाधनत्वेन तत्पूर्वकालीनस्य तस्य तथात्वं वाच्यम् । तथाचोत्तरक्षणे जायमानः परार्थः पूर्वक्षणीयजीवनस्यान्ते भवति । स च न प्रासङ्गिकस्तथा, किन्तूद्देश्यत्वेन मुख्यः । एतदर्थमेकपदम् । एतदेवोक्तमन्ते **या मतिरित्यादिना** । एवं सति परार्थ एवैको मुख्योऽन्ते यस्येति मूलार्थः सम्पद्यते । अस्मिन्नेव पक्षे योजनान्तरमप्याहुः **एकान्तत इति** । **यथोपवासा** इत्यादि । एतस्यैव विवरणं **विद्यमानमित्यादिना** क्रियते । तथाहि । तद्वत्वा स्थितस्य रन्तिदेवस्य तदभावे अन्नाभावे सति ये जाता उपवासास्ते तस्य मोक्षहेतवो जाता इत्यर्थः । तथा चैतादृशास्त उत्तमा इति भाव । **स्वत इति** । स्वत एवान्नाभावे सति न तु दानप्रयुक्त इत्यर्थः । ईदृशस्यान्यतोऽन्नप्राप्तिसम्भवेऽपि स्वस्यापेक्षासत्त्वेपि तत्पीडाभावाय तद्दत्तान्नाग्रहणेन य उपवासः स मध्यम इत्यर्थः । **तदुभयाभाव इति** । स्वतः परतश्चान्नाभावे सत्यन्नकामनायां सत्या य उपवासः स तथेत्यर्थः । **निर्हेतुश्चेदिति** । ईदृशोऽपि चेदनेनोपवासेनास्येष्टं स्वस्य वा करिष्य इति संकल्पं न कुर्यात्तदा स उत्तमः । तस्मिन्सति मध्यमः । अग्रे स्पष्टम् ।

**वातवर्षातपहिमानित्यत्र, आश्रयतुर्णामिति** । चतुर्णां मध्य आश्रयाणां सहकारीत्यर्थः । यद्वा । मन्दोऽनिल, स्वसजातीयानेकसहकारेण महत्कार्यमपि करोतीत्याशयेनेदमुक्तम् । तथा च यथाश्रुत एव ग्रन्थो बोद्धव्यः ।

**विमुखा यान्ति नार्थिन** इत्यत्र, अग्रेपि <u>वीनां मुखे न प्रविशन्तीत्यादि।</u>

---

१. तदर्थत्वात्तदर्थत्व-मु. पा. ।

अग्रेपि देहत्यागानन्तरमपीत्यर्थ । वीनां पक्षिणां गृध्रादीनां मुखानि भक्षणार्थं
१८-१९-२२. भवन्ति येषु ते विमुखास्तादृशाः सन्तो न यान्ति, दारुषु सत्सु देहस्य
भस्मीभावात् । विशन्दस्य काल्वाचकत्वेपि तथा । वृक्षमात्रभिक्षुकाः परमहंसाः ।

[1]एतावज्जन्मेत्यत्र, यदि सर्वतुल्यतेति । ज्ञाने जातेऽप्यजवस्वार्थपरता चेत्तदा
तयेत्यर्थः । अत्रैव एतावज्जन्मेत्यस्य विवरणे यथा पुमान् कुण्डलवान् कुण्डली
१०-१९-३५. भवति । न हि तत्र कुण्डलातिरिक्तं कुण्डलित्वमस्ति, तस्यैव विशेषणत्वात् ।
तथात्रापीत्याशयेनाहुः एतावदित्यादि ।

## इति एकोनविंशोऽध्यायः ।

विंशतितमेऽध्यायेऽध्यायार्थसन्दर्भे, उभयोर्निर्णयो यदित्यादि । उभयो-
र्ज्ञानकर्मणोः । भगवत्सम्बन्धं विना कर्मापि न सत्त्वशोधकम् । अन्यथा
१०-२०-७. गोपवात्रैरेव भगवद्भावः स्याद्विप्राणाम् । तथापि कर्मणो वैदिकत्वात् तस्य
च भगवत्येव तात्पर्यत्वात् पर्यवसानं भक्तावेव । तदपि न स्वतः, किन्तु भक्तसङ्गादेव ।
मत्यभावे वैयर्थ्यं च । भक्त्या इति वचनादेकस्याः प्रसङ्गेनान्यासामप्यङ्गीकारः ।
तादृशीनामपि सङ्गेन पुंसा भक्ति । 'गृह्णन्ति नो न पतय' इतिवाक्यं श्रुत्वा हि तत्समाधान-
पूर्वकं प्रभुगमनमेवोक्तवान् । सम्पन्नं च तदेव । तेनान्यशेषतया भजनं प्रभुर्न मनुते । तेन
च भगवदन्तराय एव भवति । अतो न पुरुषार्थसिद्धिरिति ज्ञाप्यते । अन्यासामपि स्नेहवत्त्वेऽपि
प्रसादविषय एव तद्धेतुत्वेन भक्त्योक्तयाऽन्यभावतो वैलक्षण्यमेतदभावे ज्ञाप्यते । तच्च
सर्वात्मभाववत्त्वमेवेति ज्ञेयम् । पुष्टिलीलायामङ्गीकार एवात्र प्रसादः, न तु शीघ्रं मुक्तिः ।
पूतनादिसाधारण्येन प्रसादविरोधोक्तिरत्र विरुद्धा भवेत् । शरीरस्य मर्यादामार्गीयत्वेन
तत्सत्कारपूर्वकं देयं दत्तवानिति हृदयम् । एवंरूपस्तयोर्निर्णयोऽप्युच्यत इत्यर्थ ।

ननु 'नन्यदा मयि कुर्वन्ती'ति 'प्रागबुद्धिमनःस्वामे'त्यादिना च स्वस्मिन्सहजप्रि-
यत्वोक्त्या स्वेतरेषु प्रीतेरौपाधिकत्वेनापुरुषार्थत्वं स्फुटमेव भगवतोक्तमिति तच्छ्रुत्वापि कथं
पत्न्यो गृहान् गता इत्यत आहुः साक्षाद्भगवतोक्तं हीति । यथा यथावत् तात्पर्यज्ञानपूर्वकं
पूर्वमेव न भावन इत्यर्थः । गोपद्वारा भास्त्रेभ्यो यदुक्तं तत्परम्परोक्तम् । उत्तमाधिकार-
रहितानामिति शेषः । एतच्च 'प्रायःश्रुते'तिश्लोकविवरणे स्फुटीभविष्यति ।

ननु देहत्यागोत्तरावधिको कष्टमार्गोऽत्रत्यं पूर्वमप्यन्येषामपि ज्ञातः सम्भवतीति कथं
प्रतिबन्धकरणमुपपद्यत इत्यत आहुः स्त्रिया भाव इति । परः[2] सर्वासां पत्नीनां भावेभ्य

१. एतावज्जन्मेत्यस्य विवरणे मू. पा. । २. परः । मू. पा. ।

उत्कृष्टः सर्वात्मभाव इति यावत् । स्त्रिया उत्तमनायिकाया भावस्तथा । यथापूर्वं न भासत इत्यर्थः । वस्तुन एव तथात्वादिति भावः । यद्वा । तर्हि पत्नीनां परम्परोक्तभानं कथमित्यत आहुः **स्त्रिया भाव** इति । यथा प्रभुवाक्यं दुर्बोधम्, तथा स्त्रीणां भाव एवोत्कृष्ट इत्यर्थः । तथा च प्रियसम्बन्धिवार्ताश्रवणजनितोत्कटभावेनैवागता', न तु वचनतात्पर्यं ज्ञात्वेति भावः । जात्यभिप्रायेणैकवचनमुक्तम् । यद्वा । ननु 'प्रसीद' त्विति वाक्यात्प्रसादस्तस्यामवश्यं वाच्यः । स च देहत्यागः सद्योमुक्तिर्वेति न वक्तुमुचितम् । एतयोः पूतनादिसाधारणत्वादन्यस्य स्पष्टतयानुक्तत्वात् तत्कार्यं न किञ्चित्पश्याम इत्यत आहुः **स्त्रिया भाव** इति । यथा व्रजसीमन्तिनीनां तथास्या अपि भावः परः सर्वोत्कृष्टः सर्वात्मभावरूप इत्यर्थः । तथाच यथैतासु लीलां कृतवानेवमेवास्यामपीति । मर्यादामार्गीयत्वाद्देहो नाशितः । यदीयमत्रागता स्यान्न निवर्तेतैव, सर्वात्मभाववत्त्वात् । अतोत्र प्रतिबन्धकं मर्यादादेहं नाशयित्वा[1] नीतवानित्ययमेव प्रसादः । अन्यथा 'ये यथा मा' मिति प्रतिज्ञा न संगच्छेतेति भावः । यद्वा । नन्वेकस्यामेव प्रसादे को हेतुरत आहुः **स्त्रिया** इति । परः सर्वासां भावेभ्य उत्कृष्टोऽस्या भावोऽतस्तथेत्यर्थः ।

**भक्ताया विप्रभार्याया** इत्यस्य विवरणे, **ज्ञानं हि ब्रह्मात्मक**मित्यारभ्य **कार्यक्षमं**
**भवती**त्यन्तम् । अत्रायमाशयः । पूर्वाध्याये हि सर्वमत्रात्यं भगवदर्थमिति
१०-२०-२. ज्ञानमुपदिष्टम् । एवं सति स्वविनियोगानर्हत्वज्ञानेन वस्तुमात्रे तथाकरणे व्यवहारविरोधेन च लीलाविरोधः स्यात् । अत एव क्षुन्निवारणस्यावश्यकत्वेन भगवदीय-वस्तूपयोगभिया नूतनप्रार्थनम् । अन्यथा फलादिभ्य एव तत्सम्भवे प्रार्थनं व्यर्थं स्यात् । तेन यदुपयोगकरणे प्रभोरिङ्गितमस्ति तस्य तथाकरणम् । यत्रातथात्वं, न तत्र तथेति ज्ञानमपेक्षितम्[2] । तत्रापि यदीदं मयैव भोक्तव्यमित्याग्रहः स्यात्तदैव बाललीलायां रसः स्यात्, अन्यथा शान्तरसमध्यपातित्वेन रसाभासः स्यात् । इदं चोपदिष्टज्ञाने जाग्रति न सम्भवतीति प्रथमं लोकानुरूपं पर्यवसानतो भगवद्गामि यज्ज्ञानं तदतो भवति तदिदमन्नमिति तथोक्तवान् । अन्नस्वामिनां बहिर्मुखत्वात् समर्पणकर्त्रीणां च भक्तत्वादुभयत्वं तस्येति । अन्नस्य ज्ञानपोषकत्वं श्रुतिसिद्धम् ।

'[3]**मां ज्ञापयते**त्यत्र, **तस्यान्नदोषो निरूपित** इति । पूर्वं यथेष्टमिति कामपदं
व्याख्यातम्, अधुना तस्यान्नविशेषणत्वमभिप्रेत्य तत्तात्पर्यमुच्यते । दोषः[4]
१०-२०-१४. स्वभोगे ज्ञेयः स कथं निरूपित इत्यत आहुः **कामपदा**दिति । अत्रेदमाकूतम् ।

---

१. नाशयित्वाऽनीतवा–मू. पा. । २. ज्ञानमप्यपेक्षितम् । मू पा. । ३. मामित्यारभ्य सर्वमवदातमित्यन्तं शोधपत्रमेकस्मिन्नेव पुस्तके लब्धम् । एतन्मूलपाठे नास्ति । ४. दोष अत्र स्वभोग्यत्वाभावो ज्ञेयः । इति क्वचित् पाठः । मू. पा.

अन्न हि पुरपस्वामिकं भवतीति तदन्न तैः स्वर्गकामनया यज्ञसम्बन्धिदेवतान्तरोद्देशेन सङ्कल्पपूर्वकं निष्पादितत्वात् सकाममपि कामप्राचुर्यात् कामरूपमेव जातमिति ज्ञापनाय तथा विशेषणम् । तेन तेषाममक्तत्व सूचितम् । तथा चान्योद्देशेन कृतमभक्तसम्बन्धि स्वभोगयोग्यं न भवतीति दोषोक्तिः । [1]किञ्च, 'मा ज्ञापयत पत्नीभ्य' इत्युक्त्वा दानसमयेपि 'मह्य दास्यन्ती'ति[2] पात्रान्तरोक्त्या चोक्तदोष एवान्नस्य स्फुटीभवतीत्याशयेनोक्त व इति पदाच्चेति । न च पूर्वोत्तरवाक्ययो: कथ सगतिरिति वाच्यम् । तासा भक्तत्वात् मदागमने ज्ञापिते मत्सन्निधिवं ज्ञात्वा वो युष्मभ्यमपि दास्यन्तीति ज्ञापयितुमादौ स्वकथनम्, अग्रे [3]दोषत्वमन्नस्य ज्ञापयितु व इति कथनमित्युपपत्तेः । अ यथा यथा भगवतोक्तं वो दास्यन्ति तथा ता अपि तेभ्य एव दद्युः, न तु [4]स्वमत्रानयेयु । तर्हि कथं तदन्नमेताभिरानीतं भगवानङ्गीकृतवानिति चेत् । अत्रैव प्रतिभाति । पन्या आत्मनोऽर्थ वात्तदन्ने तासामशो[5] भवितुमर्हति । स च तासा भक्तत्वादुक्तदोषरहित एवेति म तथ्यम् । तथा सति तस्य पूर्वमपृथग्भावात् समुदितामिप्रायेण दोषोक्तिः । ततस्ताभिर्भगवदर्थं स्वाशे पृथक्कृते तदङ्गीकरणमावश्यक प्रभो, 'भक्त्युपहृतमश्नामी'ति वचनात् ।

यद्वा । 'अन्नमादाय भाजनै'रिति भाजनोक्त्या पृथग्भावासम्भवेपि यथा तदन्ने पूर्वम न्योद्देशो दोषहेतुरभूत्, एव पश्चाद्भगवदुद्देशस्तस्मिन्नि[6]वृत्तिहेतुरभूत् । अत सर्वमेवान्नमङ्गीकरणयोग्यमित्युपपद्यते । न च तासा भक्त्या पुमशं कथमदुष्टो भवतीति शङ्कनीयम्, तत्सबन्धात्तेषामपि भक्तत्वस्य वक्ष्यमाणत्वात् ।

अथवा, काम यथेष्टमिति पक्षेपि तत्तात्पर्योक्तिस्तस्यान्नस्य दोष इति । अत्रायमर्थ । [7]आधिदैविक यज्ञं सपादयितु पुभिराधिदैविकयज्ञा मकस्य भगवतस्तदाज्ञयाध्यात्मिकानां गोपाना याच्ञाभङ्ग कृतः । सोत्र दोषपदेनोच्यते । तथा सति कथमाधिभौतिकोपि स संपत्स्यत इति ज्ञात्वा साक्षादाधिदैविके दातुमशक्यत्वादाध्यात्मिकेभ्यो वो युष्मभ्य यावता तृप्तिर्भविष्यति, तावद् दास्यन्ति तेन चाधिदैविकस्य तृप्तिर्भविष्यति,[8] आधिभौतिकश्च[10] सपत्स्यत इत्याशयेनोक्त कामपदाद् इति पदाच्चेति । अ यथा [11]यज्ञोयान्नस्य यज्ञार्थमस्थापयन्ति गा यथेष्टदानकथनानुपपत्ते । तास्तु 'यथा तरोर्मूलनिषेचनेने'ति [12]ज्ञानेनाधिदैविकद्वारेणैव सर्वं तत्रैव भवतीति सर्वमन्नमानीतवत्य इति सर्वमवदातम् ।'

---

१ किंच पूर्वं 'मा मू पा । २ दास्यन्ती'ति वक्तव्य तथानुक्त्वा वो दास्यन्ती'ति मू पा । ३ सदोषत्व मू पा । ४ स्वयमत्रा–मू पा । ५ तासामन्न–मू पा । ६ देशस्त न्निवृत्ति मू पा । ७ आधिभौतिक मू पा । ८ –याध्यात्मिकयज्ञ मद्दानां गोपानांच मू पा । ९ –भविष्यतीति, मू पा । १० आधिदैविकश्च मू पा । ११ यज्ञार्थीयान्नस्य मू पा । १२ न्यायेनाधि–मू पा ।

अत्रैव श्यामं हिरण्यपरिधिमित्यस्य विवरणे, ज्ञानक्रिययोरित्यारभ्य सर्वविरोधः
१० २० २२. परिहृतो भवतीत्युक्तम् । ननु स्वरूपस्योक्तरूपत्वे तासां व्यावृत्त्य गमनं सर्वथा विरुद्धम् । तथा हि । ज्ञानं हि क्रियापर्यवसायि । तथाच वर्हधातुप्रवालेत्यादिविवरणे केवलधर्मसहितरसदानार्थोपस्थितिपरवशतायुग्मरसख्यापनादिक्रियया तदनुरूपमेव भगवज्ज्ञानमप्यस्तीति ज्ञायते । तथा च व्यावृत्त्यगमनमेतदुभयविरोधि । इत एव मर्यादाविरोध । न हि भगवज्ज्ञानादि विरुद्धं भवितुमर्हति । 'कृष्णाङ्घ्रिपद्ममधुलिण् न पुनर्विसृष्टगेहे'मित्यादि भागवत शास्त्र रसशास्त्र च तादृशमतस्त्वद्विरोधः । अङ्गानि भगवत्प्रेम्णः प्राचीनश्रवणादीनि विभावकानुभावकादीनि च । भगवत्सङ्गतानामन्यत्रापि पतित्वेन भजनमिति भक्तेर्विरोध । व्यामोहेन समाधानस्यायमाशय । यदि पूर्वोक्तरूपेष्वेकस्यापि स्फूर्तिं स्यात्, स्यात्त कार्यमेव । किन्तूक्तानां मूलरूपे मोहकसम्बन्धात् कस्यापि न स्फूर्तिरिति न तत्कार्यसम्भव इति । यद्वा । भगवतो ब्रह्मत्वेन तज्ज्ञानशक्तेरपि सर्वसमत्वेन विकाराजनक ग्रादुष्कगतेश्च तज्जनकत्वात् तथा । तत्क्रियाशक्तिरपि योगशास्त्रादिनिरूपिता मनःसमाधिहेतुत्वेनोक्तरूपैवेति तथा । ब्राह्मणोष्वेवभावप्राकट्यं मर्यादाविरोधि । शास्त्राणि स्वस्वाधिकारानुसारेण भगवद्भजनं विदधते । तथा सति शुभं फलम्, विपरीते विपरीतमिति । एतासां विवाहितप्रभुभजनस्यैव तथात्वादुक्तरीतेश्चातथात्वहेतुत्वेन तथा । शास्त्रोक्तरीत्यैव भजनं भक्त्यङ्गमिति तद्वैपरीत्येन भावजनकरीतिप्राकट्यमङ्गविरोधि । जारत्वेन ह्यत्र भजनं स्यात्, तच्च भक्तिविरोधि । व्यामोहसमाधेरयमाशय । लोके यो हि येन यदर्थं व्यामोहितः क्रियते स तदनुगुणमेव करोति, न तु [1]स्वानुगुणम् । तथाच पूर्वोक्तानामेवभावेन भजन एव तात्पर्यमधु ॥ सम्पन्नमिति तेषां पुष्टिमार्गीयत्वकरणान्न विरोधगन्धोपीति । यद्वा । ननु स्वरूपस्योक्तरूपस्योक्तरूपत्व इत्यादिनाऽस्मदुक्ताशङ्कानिरासायाहुः सर्वव्यामोहादिति । सर्वासां पत्नीनां सर्वांशे वा तासामेव व्यामोहो भगवता कृत इति पूर्वोक्तभगवदीयज्ञानक्रियादेः कार्यासम्पत्तिरभवदेतासु, तेन गेहं गताः । अत्रेदमाकूतम् । तासां गृहगमनोक्त्या भगवदीयज्ञानक्रियादिकार्यासम्पत्ति स्पष्टैवेति ज्ञानायुक्तिर्निरर्थेति शङ्कानिरासायावश्यं तत्प्रयोजनं वाच्यम् । तच्च मर्यादादेहं त्याजयित्वा पुष्टिमार्गीयं तं प्रापयित्वा ममानीता या, तन्निमित्तं प्रभुणा तादृशा धर्माः प्रकटीकृता इति तस्या तत्कार्यं सम्पन्नम् । एतदर्थमप्राकट्यादेतासु तत्कार्यासम्भवेऽपि न विरोध । अत एवैतद्दर्शनमस्मिन् श्लोके नोक्तम्, किन्तु पूर्वस्मिन्नेव । परन्तु भवदृष्टं रूपमेकमेवेति पूर्वेणास्य श्लोकस्य संगतिः कृता । प्रतीयमानानामपि धर्माणामेतद्धृदयानारोहो व्यामोहादिति । पूर्वमप्रतीतिरेव धर्मीणामुक्ता, सम्प्रति प्रतीतावपि हृदयाप्रवेश उच्यत इति विशेषः ।

---

१ स्वानुगुणम् । मू. पा. ।

माय श्रुतेत्यत्र, कर्णपूरपदत त्पर्याक्तौ, दृष्टानन्तर्याभावादिति । दृष्टं दर्शनम् । तदानन्तर्याभावादित्यर्थः । यथुक्ताना भावाना तदनुरूपस्वीयभावे साक्षादनु-
१० २० २३ भवानन्तरं श्रवणं स्यात्, तदा पूर्वानुभवसंवादेन सर्वाङ्गे तद्रमाविर्भावः स्यात्, अत्र तु तथाऽभावान्न तथेति भावः ।

नन्वद्धा मयीत्यत्र, यावन्न भगवति प्रेमेत्यादि । अत्राय भावः । भक्तिमार्गे स्वतन्त्रपुरुषार्थत्व भगवत एवेति निरुपधिस्नेहस्तद्विषयक एव भवति ।
१० २० २६ तदुपयोगित्वेन स्वा मादे परं तथा गमिति वस्तुस्थितिः । अत एव 'यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसाद जह्यामसून्' इति महिषीवचनं गीयते । [१]एव यथा विषयिणामात्माध्यास प्रयुक्तस्नेहविषयत्वेषु देहेन्द्रियादिषु स्वात्मज्ञानेऽपि परमस्नेह, तथा भगवत्स्नेहरहितानामपि मुमुक्षूणां विषयवैराग्यमिति ज्ञेयम् ।

पतयो नाभ्यसूयेरन्नित्यत्र, पित्रादयोऽपि पूर्वपूर्वोपाधीत्यादि । पतिपितृभ्रातृ-सुतादीनां मध्ये पूर्वस्यैतन्निषेधप्रयोजको यो धर्मः स उत्तरे नास्तीत्यर्थः ।
१० २० ३१ एतदेव विवृत नहीत्यादिना । पितुस्तत्सुतदत्तपिण्डे लोभादेतन्निषेध सम्भवति, स न भ्रातरि । भ्रातुः स्वसृसौभाग्येच्छा भवति तथा । सुते तु न सा । अस्य मातुर्निर्दोषत्वमपेक्ष्यम् । अन्येषां तदपि न यथार्थः । यद्यप्य यथर्माभावोऽनसूयाया न हेतु, तथापि स्वनिष्ठतादृशधर्माणामप्यधुना नाशात् तदुपलक्षकाऽय प्रत्थ इति ज्ञेयम् । एवं संयोगमनममये प्रतिबन्धकतिहेतुभूतपत्यादिनिष्ठधर्मा एव पूर्वपूर्वोपाधिशब्देनोच्यन्त इत्यपि ज्ञेयम् ।

अथानुस्मृतये यत्याभासे, एव ज्ञानकर्मणी द्विविधे इति । विप्रतपत्न्योर्मर्यादा
१० २० ३७ पुष्टिभेदेन द्विविधे ते निरूप्ये इत्यर्थः ।

यद्विश्वेश्वरयोर्यास्त्रामित्यत्र, विश्वेश्वरपदतात्पर्यमाहुः वस्तुतो भगवतैवेत्यादि । विश्वस्यैवेश्वरो नियामकः प्रवर्तको निवर्तकश्च यत इति भावः । वलिवाक्यात् परम्परयापीत्यादि । यद्यपि भागिनिपदात् वलिना स्वविषयकर्मैवोक्तमिति न भगवद्धर्म-निरूपकं तद्वाक्यमिति भाति, तथापि यस्यैवेदं वाक्यं भवनी यैश्वर्यधर्मरूपत्वात् तस्य च भगवदीयस्यैव यशो संसारग्रहवाक्यमत्र[२] पर्यवस्यतीति भाव । ननु यान्याभक्ष्येद् भगवत्कर्तृकं एव, तदा विप्रापराधत्वेनास्य कथनं कथम् । अत्राहुः । पत्नीनां दीक्षितविहितात् प्रवासन दद्यादिति विप्रुन्दन च कारितवानिति, प्रभुत विप्रापकारवृत्तितापत्तेन इत्याशङ्क्याहुः ब्राह्मणानामयमिति । अयं सत्रगतो धर्मो नमस्यर्पणेन न बाध्यते । 'दीक्षितस्य न दद्यात्' इति-विधेस्तदानस्य विहित सावजार्थनिदर्शनार्थ यादृ शाश्रुतानतिरिक्तवस्तुदानस्यैव निषेधस्य

१ एव मति यथा मू पा । २ वक्यादमत्र मू. प ।

कृतत्वा'दित्यहीनं दहेदाशू'मितिवाक्यादात्मस्य रूपाचेति भाव । किञ्च, अग्रे फलदर्शनादपि साधनवैगुण्यं न वक्तुं शक्यमित्याहुः **स्नेहाच्चापीति** । यद्यपि तदीयान्नस्वीकारेण भक्तसङ्गेन च तेषां भक्तिर्जाता, तथाप्यग्रे तेषां कर्मफलासम्भवादिदिकर्मणो वैयर्थ्यासम्भवादेतत्करणेनापि भगवता भक्तिरेव सम्पादितेति ज्ञापनायापिशब्दः । यच्चोक्तं याञ्चाभङ्गश्चेदित्यादि, तत्राहुः **भिक्षारूपेणेति** । भगवता विहितैव सा बाध्यत इत्यर्थः । लौकिकी तु विप्रैरेवेति युक्तमपराधत्वेन कथनं याञ्चाभङ्गस्येति भावः । अतो याञ्चापराणि भगवद्वचनानि लौकिकतत्परत्वान्न निरूप्यत इत्याहुः **न्यासभूताविचादि** । यद्वा । ननु भक्तवात्सल्यपालकत्वाद्भगवतः कथं बलिप्रभृतिविरुद्धं स्त्रीषु याचनं कृतवानित्यत आहुः **ब्राह्मणानामिति** । बलिवाक्येन वर्णाश्रमधर्मत्वेनोक्ता स्नेहप्रयुक्ता च या याञ्चा सा न बाध्यते, क्रयादिविषयिणी सा लौकिकी, सापि तथा । किन्तु दैन्यप्रयुक्तैव सा बाध्यत इत्यर्थः । प्रकृते च न दैन्यप्रयुक्ता सा, 'भक्ताय प्रसीद'तितिवाक्यादिति भाव । अत एव तादृग्वचनैरविरोध इत्याहुर्न्यासभूतावित्यादि ।

**विमुखा ये त्वधोक्षज** इत्यत्र, **ज्ञानेष्वात्मसाक्षात्कार** इत्यादि । इन्द्रियजन्य-
ज्ञानस्य पुरुषोत्तमाविषयत्वं प्रदर्शयन्ति **ज्ञानेपीत्यादिना** । मनोजन्यात्म
१० २० ३९ साक्षात्कारफलकज्ञानमार्गस्यात्ममात्रपर्यवसायित्वम् । कर्ममार्गस्याधिकारिभेदेन द्वैविध्यम् । बहिर्मुखाना तु क्रियारूपे भजनम्, तेनैवादृष्टद्वारा फलसिद्धिरिति यतन्त मतम् । श्रुतिता पर्यज्ञानवता त्वलौकिके यज्ञरूपे भजनमितीन्द्रियजज्ञानकृत्यविषयत्वेनाधोक्षजत्वं सिद्धमित्यर्थः । भक्तिमार्गे भगवत्साक्षात्कारो 'नाहं वेदै' 'र्न तु मां शक्यसे द्रष्टु'मित्यादि वाक्यैर्नेन्द्रियजन्य इति भाव । दृष्टेपि भगवति यावत्सर्वेन्द्रियैः साक्षान्नानुभूयते, न तावत्स्वास्थ्यमिति, न साक्षात्कारमात्रं फलम् । 'दर्शयन् मुहुर्मनसि स्मरं यच्छमा'ति वाक्याद् दर्शनस्याग्रेतनभोगोपयोगित्वेनाङ्गत्वम् । यथेक्षुदण्डस्य रससम्बन्धाद् भक्ष्यत्वम्, तथा भगवदानन्दलेशसम्बन्धेनास्येषां रूपाणां भजनीयत्वमित्याशयेनेक्षुदृष्टान्तः । केवलरसात्मकं स्वयमधुनैव प्रकटं स्तांति पूर्वमेव ते पञ्चा कर्तव्यत्वेन स्थिता, नत्वन्न परमपो याहुः **अत एतादृश** इत्यादि ॥ **इति विंशोध्यायः** ॥

**एकविंशाध्याये, एतद् ब्रूहि महान्काम** इत्यत्र, शुश्रूषा इत्यग्रे कथनात् सम्प्र-
त्ययेनेच्छैवोक्तेति कामपदार्थमन्यमाहुः **अभिलषितोर्थ** इति । यद्यप्यद्वारा
१० २१ ४ कथनेपि शुश्रूषानिवृत्तिः सम्भवति, तथापि शुश्रूषवे महां साक्षाद्भगवत्क-
थनलक्षणोर्थो महानिति प्रातातिकार्थः । वस्तुतस्तु यागभङ्गलक्षणोर्थस्त्वन्यथेति हृदयम् ।

तथाप्य-यभजननिवारणपूर्वकस्वभजन एव प्रभुतात्पर्यमिति पक्षान्तरमाहुः तद्विषयिणीच्छा वेति । स्वयागविषयिणी सेत्यर्थः ।

पर्जन्यो भगवानित्यत्र, अन्यथा तद्रेतसेत्यादि । भगवदतिरिक्तस्यैकस्या-
१०-२१-८. खिलजगदुत्पत्तिस्थितिहेतुत्वं न सम्भवतीत्येतत्परोऽयं ग्रन्थ. ।

इत्यद्रिगोद्विजमखमित्यत्र, वासुदेवत्वेन शुद्धसत्वाकारमन्तःकरणं कृत्वा कर्मो-
पयोगिश्रद्धासामर्थ्याद्युपयोगित्वेन तत्राविर्भूय सर्वं कारितवानित्याशयेन
१०-२१-३८. वासुदेवप्रचोदिता इत्युक्तम् । प्रेरणे प्रकर्षोऽप्ययमेव । अन्यथा न वदेत् ।
अग्रे च गमने गोपानां मुख्यत्वं प्रभोस्तु गौणत्वमुक्तमित्यनावेशस्तदा सूच्यत इति तदु-
भयतात्पर्यमाहुः भगवदावेशेनैतदित्यादि ॥ इत्येकविंशोध्याय. ॥

द्वाविंशाध्यायार्थोक्तिसन्दर्भे, तद् ज्ञापयति निश्चितमिति । दृष्टार्थफलककर्माधिष्ठाता दृष्टानिष्टजननद्वारा स्वत्यागे सति स्वानुभावं ज्ञापयतीत्यर्थः । अदृष्टानेकसाधनसत्त्वेपि गोवर्धनाख्यदृष्टसाधनेनैव रक्षणे तात्पर्यमाहुः उभयोर्हेतुकृत्वार्थमिति । एतज्ज्ञापनार्थ-मित्यर्थः । 'तत्क्षेपेणोपजीवन्ती'तिवाक्यात् स्वोपजीव्याजनकत्वेनेन्द्रो यष्टव्य इति व्रजराजेनोक्तं यथा, तथा भगवतापि 'वयं गोवृत्तयोऽनिशं' 'वनशैलनिवासिनश्चा'त उपजीव्यत्वाद्रितो'र्गवादीनां मख आरभ्यता'मित्युक्तमित्युभयार्हेतुकृत्वम् । एवं भगवता कृतमिति । दृष्टमेवानिष्टमन्यप्रतीत्या दृष्टेनैव तद्वारणं चेत्यर्थ. । अन्यथा 'गोपाये स्वात्मयोगेने'तिपदं विरुध्येत । तद्रूपेण भुक्तं यद्रूपेणैव रक्षितवानिति तत्त्वम् । दशश्लोक्यां मतिवाक्यार्थोक्तौ सर्वनाशनादिति । सर्वपुरुषार्थनाशनादित्यर्थ । तेषामेतद्धचा-वरत्वादिति भावः ।

कृष्णं मर्त्यमित्यस्य द्वितीयार्थोक्तौ, अथवा कृष्णमित्यादि । विपरीतषड्गुणमिति
मर्त्यपदव्याख्यानम् । मर्त्यस्यानीश्वरत्वादिधर्मैरेव येन विपरीतषड्गुणा लक्ष्यन्ते ।
१० २२ ३ तथा च अह्नि [1]गृह्यमाणपि प्रीतिमारोपसारधर्मारोप सदानन्दे कृतवन्त इति
मे अप्रियं चक्रुरित्यर्थः । तत्त्वेनोपाश्रियेयस्यैव विवरणं भगवत्यपीत्यादिना कृतम् ।

अहं चैरावतं नागमित्यत्र, अक्षयो गजो जले स्थले चेत्यादि । अमृ-
तमथनप्रस्ताव एवोत्पन्नत्वेनामृतधर्मा अप्यस्मि सन्तीत्यक्षयत्वम् । पूर्वं जल
१० २२ ७ एव स्थितत्वादधुना च स्थले सत्वात्तथेत्यर्थः ।

शिलावर्षनिपातेनेत्यस्मात्, अन्यद्वा कर्तव्यमिति । अधुना स्वस्मिन्प्र-
१० २२ १८. वेशोऽन्यस्तदार्थो ज्ञेयः ।

१. गृह्यमाणपीतिमा—मू पा ।

**तत्र प्रतिविधिमित्यत्र योगमायेत्यस्याभासे, न प्रशासनन्यायेनेति ।**
१०-२२-१६. ‘एतस्यैवाक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत’ इति श्रुत्युक्ततद्धारणवदत्र तन्न सम्भवतीत्यर्थः ।

**गोपाये स्वात्मयोगेनेत्यत्र, पर्वतधारण** इत्यारभ्य **भविष्यन्तीत्यन्तम् ।**
१०-२२-१८. अत्र हि द्वयं कार्यम् आसाराद्रक्षा पर्वतधारणेन, एतेषां जीवदेहादिरक्षा च ।
अन्यथा पर्वतधारणेपि प्रलयकालीनमेघानां स्तनितादिभिरेवप्राणस्थितिर्न स्यात् । तदेतदुक्तं **पर्वतधारण** इत्यारभ्य **योग एवे**त्यन्तेन । तेनात्मयोगेन गोपाये । स्वात्मयोगेन गोपाय इति मूलार्थो विवक्षितः, अन्यथा स्वपदं न वदेत् । अथवा । स्वश्चात्मयोगश्च तयोः समाहारस्तथा । युज्यते फलमनेनेति योगः साधनं सामर्थ्यं शक्तिरिति यावत् । आ मनः सा योगमायैवेति सैवोक्ता । एवं सति स्वेन तत्प्राणादिरक्षा स्वरूपानन्ददानेन । तदुक्तं ‘क्षुत्तृड्व्यथा’मित्यनेन मूले । तथाचाद्रिधारणे तेनासाराद्रक्षेति भावः । ‘तस्मान्मच्छरणं गोष्ठ’मिति वाक्ययोरव्यवधानन्तरं प्रामाशङ्कानिरासायाहुः **प्रथमं क्लेशसम्बन्ध** इत्यारभ्य **ततो भवे**दित्यन्तम् । नन्वीदृक्परिग्रहे नन्दादीनामन्यभजनमसम्भवि । कथञ्चित्सम्भवे वा ततो निवर्तनमेवोचितम, न तु यागोपदेशोऽपि, स्वरूपेणैवैतत्परिग्रहात्साधनानन्तरान[1]पेक्षणात् । न चाधुनैवायं परिग्रह इति वाच्यम्, ‘स्वगोकुलमनन्यगति’मित्यादिवाक्यैः सार्वदिकत्वात् । किञ्च, स्वस्य सर्वज्ञत्वेन व्रजपरिग्रहस्य च पूर्वसिद्धत्वेन शरणागमनप्रार्थनपर्यन्तं तूष्णींभावोनुपपन्न इति चेत्तत्राहुः **प्रथम**मित्यादि । अत्रायं भाव । अत्र परिग्रहेणैव सर्वम्, न तु सोऽप्यन्यसाधनसाध्य इति ज्ञाप्यते । एवं सति पूर्वं विपरीतसाधनवत्त्वेपि स्वपरिग्रहेणैव तन्निवर्तनोक्तौ तत्सम्पद्यते, न तु पूर्वमेव तदभावोक्तौ । अत एवेतरसाधनासाध्यत्वोक्तिपूर्वकं ‘यमेवैष वृणुते तेन लभ्य’ इति श्रुतिरप्याह । इदमेवोक्तं **प्रथमं क्लेशे**त्यर्धेन । यागोपदेशप्रयोजनमाहुः **शरणागमन** इत्यादि । अन्यथा भगवद्वचनादिन्द्रयागे त्यक्तेऽस्माभिः क्लेशः प्राप्त इत्यसूयैवोत्पद्येत । तथा सति सर्वो निरोधो व्यर्थः स्यात् । परिग्रहस्य स्वतःप्राबल्यज्ञापनायैतेषां लोकसाधारणी रीतिर्यत उच्यते, अतो नासूयानुपपत्तिशङ्कापि । पूर्वं देहेन्द्रियादीनामन्यत्र विनियुक्तत्वादपि तत्सम्भवः । अत एव तादृशत्वे इन्द्रियादीनां निरोधो न सम्भवतीति स्वकर्मणि विनियुक्तानास्तानि तद्वस्तूनि च । तथा सति पूर्वदोषापगमात्प्रभौ न दोषारोप, तच्छरणागमने च बुद्धिरभूत् । न च स्वरूपबलेनैव परिग्रहादेतत्स्थैर्यमिति वाच्यम्, परिग्रहान्तःपातित्वादस्य । परिग्रहो हि तेषां तदीयस्य च वाच्यः, तेषां च परिग्रहीतृनिष्ठत्वाभावे परिग्रहस्वरूपासम्भवात् । न च शरणागमनेन परिग्रहोऽन्यथा-

1. साधनान्तरान—मु. पा. ।

चानिष्टत्वात् तेष्वपि रययोगो ज्ञाप्यते । अन्यथे युक्त्वा दधारेति न वदेत्, वदन् विनापि गोवर्धनोद्धरणेन रक्षासम्भवादिति भावः ॥ इति द्वाविंशोऽध्यायः ॥

**त्रयोविंशाध्यायार्थोक्तौ**, अज्ञानमिति । **निरुद्धानामज्ञानादि कृष्णगं**
कृष्णविषयकं मिथ्यार्थत इत्यर्थः । प्रयोजनमाहुः **समत्वायेति** । गोवर्धनोद्धरणेन
१० २३ ० धृतो यो निरोधः स तु सर्वेषां समान इति तज्ज्ञापनाय तथेत्यर्थः ।
**प्राकृतत्वेनेति** । स्वनिष्ठो हेतुः । **जातस्तादृश एवेति** । तादृश एव, अप्राकृत एव, प्रकट इति । अत्र भगवत्यप्राकृतत्वस्वसम्बन्धित्वयोर्विरोधाभावान्न सन्देह इति परः सिद्धान्तस्तथा, उच्यत इत्यर्थः । गर्गवाक्यानि परे सिद्धान्ते । **तथा**, हेतव इत्यर्थः । **तज्ज्ञानमिति** । भगवत्स्वरूपज्ञानं फलमित्यर्थः ।

**एवंविधानीत्यस्य** विवरणे, **हेत्वभावे नैवेतत्कार्यमिति** । अतिप्राकृतबुद्धितुच्य
त्वज्ञापनार्थैवमुक्तमिति ज्ञेयम् । तेन भगवन्माहात्म्यं सूचितं भवति । यद्वा,
१० २३ १ हेतुत्वेन प्रतीयमानो यः प्रभुस्तद्योन्याभाववता तदतिरिक्तेनेत्यर्थः ।

**श्रूयतां मे वच** इत्यत्र, **पूर्वपक्षसिद्धान्तयोर्व्यत्यास** इति । नन्दस्यात्मनो
देहाज्जातत्वाभावेन तथात्वं सिद्धान्तो भवितुमर्हति यद्यपि, तथाप्येतादृश
१० २३-१५ एव स्वात्मज इति भगवता लीलार्थं तद्बुद्धिः सम्पादितेति तथात्वम् । न
चास्या भ्रमरूपत्वेनास्य सिद्धान्ताभासत्वम्, न तु वस्तुतस्तथात्वमिति वाच्यम्, हेत्वसिद्धेः । भगवता तथैव लीलार्थमङ्गीकारात् । नित्यस्यैवम्भावोऽनुपपन्न इत्याशङ्कानिरासाय तादृशस्य तथात्वे हेतुमाहुरद्भुतकर्मेतीति । लौकिकोपपत्तिरहितं ह्यद्भुतम् । तथाचात्र तद्राहित्यं भूषणम्, न तु दूषणम्, अद्भुतकर्मत्वलक्षणस्वरूपसम्पादकत्वात् । अत एव 'तस्मान्नन्दात्मजोऽयं ते' इति गर्गोक्तिरपीति भावः ।

**वर्णास्त्रय** इत्यत्र, **वाक्यान्यष्टश्लोकैरुक्तानीति** नामकरणसमये गर्गेण छन्दो-
ननुरोधेनैव वाक्यान्युक्तानि, तथैव न दैरपि, तान्येव व्यासेन श्लोकैरुपनिब-
१० २३ १६ द्धानीति तथोक्तम् । यद्यप्यासन्नित्यादीनि तानि सप्तैव, तथापि मन्ये नारायणस्यांशमित्यादिकं गर्गवाक्यफलितार्थनिरूपकत्वेन तद्रूपमेवेत्याशयेनाष्टसङ्ख्योक्ता ॥ इति त्रयोविंशोऽध्यायः ॥

**चतुर्विंशाध्यायतात्पर्योक्तौ, गोरक्षा चेदि**त्यारभ्य **जायत** इत्यन्तस्याय भावः ।
साजात्यमात्रेणाप्यखिललौकिकगवाधिदैविकगामिनी पालनलीला पुरुषोत्तमाति
१०-२४ ० रिक्तस्य न सम्भवतीति तत्प्रमापिका तादृग्रूपसुरभिप्रपत्तिः । तदुक्तं 'भवताऽलोकनाथेन सनाथा वयमच्युत' इति सुरभ्या । लोकभिन्ना अलोका अलौकिकस्य इति

यावत् । तामा नाथेन पालनकर्त्रा त्वया वयमपि सनाथा पालिता भवाम इत्यर्थः । लीलास्थपदार्थमात्र इयं व्यवस्थेति ज्ञापनायाल्लोकेति सामान्योक्तिः, अन्यथोक्तरीत्या लोकनाथेति[1] वदेत्। तत्र हेतुरच्युतेति । धर्मतोऽपि च्युतिराहित्येन पालनलक्षणो धर्मो यद्यस्मद्ग्रामो न स्याद्गोत्वाविशेषात् तदास्मदंशे स च्युतः स्यादित्यर्थ । तदेयमिति । लीलापदं भावप्रधानम्। भगवल्लीलाप्रमाणमिति समस्त पदम् । तथा चेयमुच्यमाना लीला भगवल्लीलात्वे प्रमाणं तथेत्यर्थः । ननु हेतुवादसिद्धत्वेने दयामथेद् भग्नः, तदा प्रकृतेपि 'भवता लोकनाथेन'त्यादिना रक्षकत्वादिहेतूक्तिपूर्वक एवेन्द्राभिषेकः कृत इति को विशेष इत्यत आहु अतो हेतूक्तिरपीति । यतो यागभङ्गकरणप्राप्तमदोषत्वशङ्कापरिहाराय तद्भङ्गनदपूर्वकारणपालनानां [2]केवललीलात्व ज्ञापनीयम् । तच्चाधिदैविकगोनिरूपणेन भवतीति तद्रूपमेव । अतोऽत्र हेतूक्तिरपि । एषा लीलारूपैवेत्यर्थ । अत एव 'भवाय भवे ति 'कृष्णेऽभिषिक्त एतानी'त्यादिना सफला वर्ण्यत इत्याहुः सत्फलेति । किञ्च, पारम्पर्यागतमर्यादा-भङ्गोऽप्येवं न जात इत्याहुरिन्द्रयागभेति । अग्रेपि प्रतिवर्षं गोमखं करिष्यतीति भवितेयुक्तम् । एतेन लीलासम्बन्धिलोकपालादयोपि न भगवदतिरिक्ता इति ज्ञापितमिति दिक् ।

गोलोकादाव्रजदित्यत्र, न हि मा कृतैः स्ववशीयैरिति । प्रकृत लीलाकरणं
१०-२५ १ तत्सम्बन्धिभिरित्यर्थ । तथा सति लीलारसविरोध स्यादिति भाव ।

इन्द्रस्तुल्याभासे, दशभि प्रमाणश्लोकैरिति । भगवदपराधैराधिदैविकसर्वतिरोधाने
तादृशा प्राणा अपि तिरोहिता इत्यय मृत इवाधुनेन्द्राधिदैविकत्वप्राप्त्या
१० २५ ३ स्वजीवनसिद्ध्यर्थं तत्समानसंख्यकैः श्लोकैः स्तुतिमाहेति संख्यानात्पर्यमु-
क्तम् । ननु 'गोवर्धने धृते शैल' इतिवाक्यात् क्रियाशक्त्याविर्भावं कृत्वा यथाय बोधितस्तथा पूर्वमेव ज्ञानशक्तिमेवाविर्भाव्य कुतस्तथा न कृतवान्, तदा प्रभुमाहात्म्यज्ञानान्नापराधं कुर्यात्, अधुनापि चेत्यत आहुः क्रियाशक्तीति । इन्द्रादीनां बाहुरूपत्वादिति भाव । ननु प्रयोजनमस्तीति कुतस्तथा नाकरोदित्याशङ्क्य तदनधिकारमाहु बाह्यश्वापमिति । [3]हेतुकर्मसम्बन्धित्वेन वेदबाह्य इत्यर्थ । अत एव गवादिद्रोहार्थमागमनमिति भाव । एतदेवाहुस्तथाविध इति । अतःपरं क्रियाशक्तिर्यत्प्रयोजनार्थं स्वस्मिन्यावती च दत्तास्ति तदुपयोगिज्ञानमपि दत्तमस्तीति भगवदपराधेन चतुर्विधपुरुषार्थाना भगवद्दत्तगुणानां च

---

१-ऽलोकनाथेति मू पा । २ कश्चित्पुरुषोत्तमचोलाम्ब देवकार्यकृतिरूपेइत्यर्थः । (इद टिप्पणं न ग्रन्थकर्तृणाम् ) । ३ हैतुक—मू पा ।

विरोधानं ज्ञा वा तत्सिद्ध्यर्थं स्तौतीति तावन्मद्वचकैः श्लोकैः स्तुत्या ज्ञाप्यत- इत्याहुः पुरुषार्थमसिद्ध्यर्थमिति ।

स्वच्छन्दोपात्तदेहायेत्यत्र, नटवदेव रूपमित्यादिप्र थ पूर्वोक्तरूपे इस्तु य
१० २५ ११ भिप्रायेणेति ज्ञेयम् ॥ इति चतुर्विंशोऽध्यायः ॥

[1]पञ्चविंशेऽध्याये तात्पर्योक्तौ, अन्यथा नन्दविज्ञानमिति । यदि वरुणैश्वर्य तदास्यस्वानयनलक्षण पुरुषसम्बन्धि यत्पर माहात्म्य पुरुषोत्तमत्वेन ज्ञानजनकमिति यावत् तद्दर्शन न स्यात्तदा तत्तदेव पूर्वोक्तं नारायणांशत्वेन देवोत्तमत्वेन यज्ज्ञानम्, वस्तुतस्तु पुरुषोत्तमविषयकमेव ज्ञान भक्तिमार्गविरुद्ध, पर्यवसयि पर्यवसानशालं स्यादित्यर्थः । तथा सत्यग्रे भजनानन्दानुभवो न स्यात्, तद्विरुद्धज्ञानवत्त्वाद्, अतो विरुद्धमाहात्म्यवत्त्वेन पुरुषोत्तमत्वेन ज्ञान जननीयम्, भक्तिमार्गविरुद्धज्ञानवत्त्वेन निग्रहश्च कार्य । वरुणद्वारा भगवानुभय कारितवानिति वरुण सेवकत्वेन प्रभुर्मेनुत इत्यर्थः ।

नमस्तुभ्य भगवत इत्यत्र । विवादे सरित्स्वत्यादि । ननु 'यावज्जीवमग्निहोत्र
जुहुया'दित्यादिकर्मकाण्डेन । यदहरेव विरजेत्तदहरेव प्रव्रजेत्' 'यामिमां
१० २५ ६ पुष्पिता वाच'मित्यादिना च विरोधात् कथ तत्तदुपास्याना न[2] नमस्यतेत्या-
शङ्क्य तत्र विषयव्यवस्थामाहुः विवाद इति । विषयस्य विवादविषयस्येत्यर्थ । देहाद्यध्यास-कृताधिकारकत्वेनाज्ञानमूलकत्वेन क्रमशो जय यवात् 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मन, न ज्ञान न च वैराग्य प्रायः श्रेयो भवेदिहे'ति प्रभुवचनाद्भक्तिमार्गो मार्गान्तरस्य दौर्बल्यम् । तत्रोपास्यरूपाणा भक्तिमार्गसेव्यपुरुषोत्तमरूपाद् दौर्बल्यमिति भावः । भक्तिमार्गाज्ञानदशायामेव कार्यता तेषा दौर्बल्यम् । अत एव 'मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायत' इति भगवतोक्तम् । ननु चार्वाकादिभिरीश्वरो नाङ्गीक्रियत इतीश्वरोऽपि न सर्वसिद्धान्तसिद्ध । किञ्च, ईश्वरवादिनामपीद स्वरूपं शुद्ध ब्रह्मरूपमिति न सर्वेषा सम्मतमित्यत आहुः सरित्स्वति । मोहकशास्त्रजमोहरहिता सन्त, तेषु परस्पर यस्मिन्विषये विवादस्तत्र तथेत्यर्थ । अत एवाग्रे श्रुत्यादिक्रमेणोक्तम् ।

न यत्र श्रूयते मायेत्यत्र, लोकानामित्यादि । मायया मोहिता एव तथा कल्पयन्तीति तथा । कार्यो मोहः, कारण सा । [3]एतदेवाहुः कार्यकारणरूपिणीति ।

आनीतोऽय तव पितेत्यत्रेदप्रयोग विनापि चारितार्थ्ये तत्प्रयोगात् तत्ता-
त्पर्ययुक्त वेपमानः पुरो वर्तत इत्यनेन । तत्र भगवदैश्वर्यदर्शनज-
१० २५ ७ सात्त्विकभावात्तथेति ज्ञेयम् ।

१ पञ्चविंशाध्याये मू पा । २ —पास्यानां नमस्य-मू पा । ३ एतदाहु मू॰ पा ।

नन्वस्त्वतीन्द्रियमित्यस्याभासे, यथैक वचनमिति । गोसवकर्तव्यताबोधकं वचन मज्ञानयते द्रमानभङ्गगोवर्धनोद्धरणव्रजजनाप्यायनत माहात्म्यज्ञानेन्द्र-
१० २५ ९ प्रणतिगोविन्दनामधारणाद्यनेककार्यं करोति तथेत्यर्थः ।

ते तु ब्रह्महृदमित्यस्याभासे, विलय एवाभूदिति । अयमर्थः । लोकस्याक्षरा-[1]त्मकत्वेनानन्दरूपस्य सर्वत्राविर्भावेन सर्वेषां देहेन्द्रियप्राणान्तःकरणात्म-
१० २८ १६ स्वाविर्भावे प्रकटाग्निसम्बन्धात् काष्ठान्तर्गताग्निप्रादुर्भावे तस्याप्यग्निरूपता-परया काष्ठताविलयवदेतद्देहादीनामप्यानन्दतापत्त्या देहादिभावविलयोऽभूदिति । प्रत्या-पत्त्यर्थमिति । पूर्वभावसम्पत्त्यर्थमित्यर्थः । तदात्मकाशस्येति । सर्वत्राविर्भावात् तत्तद्देहादि-ष्वप्याविर्भूताशस्येत्यर्थः । काष्ठाग्निवदिति । काष्ठान्तर्गताग्निप्राकट्यार्थं योऽन्योऽग्निस्तत्र प्रविष्टस्तत्स्यापि तदतिरोधाने तिरोधानं न यथा, तथेत्यर्थः । अर्धज्वलितानामिति । अत्रैवं ज्ञेयम् । व्रजवासिमनोरथपूर्त्यर्थं ब्रह्मानन्दाद् भजनानन्दे तारतम्यज्ञापनार्थं च स्वलोकस्य हि प्रदर्शनम् । तारतम्यज्ञानं चाग्रे नैतत्स्फूर्तिं विना सम्भवति । सा चाधुनैतदनुभवं विना तथेत्यधुनैतदानन्दानुभवोऽपि वाच्य । स च स्वस्मिंस्तद्भिन्नत्वाज्ञानं विनानुपपन्न । एवं सत्यानन्दात्मकत्वे स्वस्य भेदज्ञानपूर्वकमक्षरानन्दानुभवार्थं अर्धज्वलितत्वम् । पुनः काष्ठना तु पूर्वोक्तदेहादिष्वाविर्भूतलोकस्य तिरोधानेन तत्सम्बन्धजनितानन्दात्मकत्वभानतिरोधानेन च यथापूर्वं स्थितिः । एवं करणस्यावश्यकतामाहुः अन्यथेति । तद्धेतुमाहुस्तत्वेति । अन्यथा भाव । ज्वलितांशस्य पुनः काष्ठतावदानन्दात्मकतामापन्नस्य देहादेः पुनर्जडभावो दुःशक्य । प्रकृते तु लीलास्थयोग्यत्वात्सर्वथा देहादिभावे स एव च तथात्वसम्भवाद्देहादिभाव प्रकृतिः, मुख्यवस्था विकृतिरिव । एवं सति विकृतिमपास्य प्रकृतिसम्पादकमेतादृशानां वेदनमेव भवितुमर्हति । [2]कार्यस्यामर्यादत्वादेतदपि न मर्यादामध्यपाति तथा भवितुमर्हत्यतो यथा हृदो नद्यन्तर्गत एव प्रवाहाद् भिन्न सन् सदातिनिर्मलः स्वयं मकरन्दारविन्दोदयहेतुः सततमतिगभीरतया स्नानपतितपदार्थपूरणपटुस्तथा वेदान्तप्रमेयं मर्यादामार्गीयाद् भिन्न सहस्त्वेन निरुपमाननानन्दानुभवहेतुर्विचित्रभावजनक पुष्टिमार्गीयमेवेति ज्ञापनाय मूले वेदस्य ब्रह्मत्वं हृदत्वं चोक्तम् । एतदेवोक्तं तद्भिन्नस्य जलात्मकत्वमिति यनेन । न चाक्षरात्मकत्वेन लोकस्य तदानन्दवाचकं ब्रह्महृदपदमिति वाच्यम्, ब्रह्मानन्दस्य महत्त्वेन हृदत्वाभावेन तत्त्वोक्त्यनुपपत्तेः । आनन्दपदं हित्वा हृदपदोक्तावेतस्य तात्पर्यं वाच्यम् । ननूक्तरूपमेव सम्भवति । एतनैवाक्षरपरत्व ब्रह्मपदस्य निरस्तम् । तावस्य पूर्वमेवोक्तेश्च । मध्ये शब्दब्रह्म-

---

१—त्मकेन मू पा. । २—देहादिभवत्कनिष्प्रपत्त्या भजनानन्दानुभवहेतुत्वाच्च ।

योजनाया हेतुमग्रे वक्ष्यन्ति प्रमाणतो ज्ञानमित्यादिना। एवं सत्यत्र हृदत्वमज्जनोक्तिभ्यां जलरूपतापि शब्दब्रह्मणोस्तीति मन्तव्यम्। तदाहुस्त एवेति। एतस्यापि व्यापकत्वात् क्वचिद् गोकुलनिकटे प्रकटीकृत्येत्यर्थ। एवं कृतेरावश्यकतामाहुः तत्कार्यमिदमिति। एतादृशानां पूर्वभावसम्पादनलक्षणं कार्यं प्रमाणतो ज्ञानं च तदेकसाध्यमित्यर्थः। अत्रोपपत्तिमाहुरग्रे चेति। 'यत्राक्रूरोऽध्यगात् पुरे'त्यनेन। तत्र हि शब्दब्रह्मात्मके जले भगवत्स्वरूपं स ज्ञातवानिति। मज्जनपदार्थमाहुः शब्दब्रह्मात्मका एव जाताः। तत्र हेतुरुत्तमाधिकारिण इति। नन्वस्मादप्युद्धरणस्यावश्यकत्वे पूर्वस्मादेव किमिति नोद्धृत्य प्रकृतिभावं सम्पादितवानित्याशङ्क्य तत्र हेतुमाहुः क्रमश्चायमित्यादिना। स्वकृतमर्यादा-स्थापनार्थं तथाकृतिरित्यर्थः। तमेवाहुः परब्रह्मेति। परब्रह्मणा पूर्वं स्वस्मिन् स्थितं पश्चात् स्वस्माद्विभक्तं यद्वस्तु तच्छब्दब्रह्मात्मकं भवति। ततस्तेन तथा कृतं जगद्रूपं भवतीत्यर्थः। इदमत्राकूतम्। साक्षाल्लीलोपयोगि जगद्धि सच्चिदानन्दात्मकं स्वस्मिन् स्थितं क्रीडेच्छया स्वस्माद्विभक्तं करोति प्रभुः। यतोन्तः स्थितं न बहिःकार्यक्षमम्। तच्चानन्दस्वरूपाद्वि-युक्तं सत् [1]स्वरूपमलभमानमिव न किञ्चित्कार्यक्षमं भवति। तदा प्रवृत्तिनिवृत्तिभ्याम-लौकिकीभ्यामलौकिककार्यसम्पादनक्षमं शब्दब्रह्मेति तदात्मकतया लीलोपयोगि प्रवृत्तिनि-वृत्तिक्षमं भविष्यतीति ज्ञात्वा तथा सम्पाद्योक्तसामर्थ्ये सम्पन्ने तस्य प्रमाणरूपत्वाल्लीलायां प्रवृत्तिनिवृत्ती स्नेहाधीने इति न तदुपयोग इति तस्मादप्युद्धृता इति। एतदेवोक्त-मन्यथा प्रमाणगृहीता इत्यादिना। लीला हि स्वतन्त्रा। एते प्रमाणाधीनत्वे विहितमेव कर्म कुर्युर्नेतरदपीति तत्रानुपयुक्ता भवेयुरित्यर्थः। यद्वा। प्रमाणमार्गगृहीतत्वं प्रमाणैकवश-चित्तत्वम्। तच्च पुष्टिलीलाप्रवेशानधिकाररूपमेवेति तथेत्यर्थ। तदार्द्रनयना इति। जले निमग्नानामार्द्रे ते भवत एव। प्रवृत्ते च तस्य शब्दब्रह्मात्मकत्वेन यादृशं श्रुतिसिद्धं भगवत्स्वरूपं तादृशमेव दृष्ट्वापि पश्यन्तीत्येतदेवार्द्रत्वम्। तदानन्दाश्रुभिरपि तथात्वं ज्ञेयम्। सर्वस्यापि प्रघट्टकस्य तात्पर्यरूपं गूढाभिसन्धिमुद्घाटयन्ति ब्रह्मानन्दादिति।

यद्वा। ते तु ब्रह्महृदं नीता इत्यस्याभासः। ततो दर्शनानन्तरमित्यादि। अत्रायं भावः। अक्षरानन्दाल्लीलात्मकानन्दस्याधिकत्वेप्येतेषां तद्रूपत्वेन तन्मध्यपातित्वे-प्यक्षरानन्दस्येयद्वध्यननुभवेन तारतम्याज्ञानाद् भगवता च लोकमध्य एव लीलाकरणात् स्वस्येतरलोकसाधारण्यं मन्यमानानां स मनोरथोभूत्। तत्पूर्त्यर्थं स्वलीलात्मकवांशं हस्तविहितमिव कृत्वा साधारणीं रीतिं प्रकटितवान्। तस्या तु सच्चित्प्राकट्यमेव जीवेषु, नानन्दांशस्य। तत्प्राकट्ये च ब्रह्मभावः सम्पद्यते। स चाक्षरानन्दांशभूतः। अक्ष-

[1] स्वस्वरूप—गृ पा.।

मेपदेनैतेषां प्रमाणतो ज्ञानकरणार्थं लोकं 'प्रदर्शितवानिति वक्ष्यमाणत्वाल्लोकदर्शनेन माहात्म्यज्ञानपूर्वकः स्नेह आर्द्रनयनत्वोक्त्या सूच्यते।

[1]नन्वेवं व्याकृतौ को हेतुः? यथाश्रुतव्याकृतेरपि साधीयस्त्वेन प्रतीयमानत्वात्[1]। तथाहि। अतिगभीरत्वेन [2]शुद्धत्वेन तापहारकत्वेन[2] ब्रह्मानन्द एव ब्रह्महृदपदेनोच्यते। *यथा ह्रदे मग्नो बाह्यमर्थं न जानाति, तथा तदानन्दभरेण* देहाद्यनुसन्धानरहिता जाता इति ज्ञापनाय मज्जनोक्तिः। ततः कृष्णेन पूर्णानन्देन ततो[3] गणितानन्दात्पृथक्कृताः देहाद्यनुसन्धानयुताः कृताः। तदा तल्लोकं ददृशुः। अत एव ब्रह्मण इति व्यस्तं पदमुक्तम्, दर्शनक्रियायाः पूर्वमसम्भवात्। एवं साधारणानां व्यवस्थामुक्त्वा श्रीनन्दादीनां विशेषत आह **नन्दादय** इति। किञ्च, 'दर्शयामासे'ति पूर्वं भगवत्कार्यमुक्त्वैतत्कर्तृकदर्शनं 'ददृशु'रित्यनेनोक्तम्। [4]एवं सति तावत्पर्यन्तमेकवाक्यतैवोचिता, न तु वाक्यभेद इति चेत्। स्यादेतदेवं यदि दर्शयामासेत्युक्त्वा विषयस्वरूपं चोक्त्वानुपदमेव ददृशुरित्युक्तं स्यात्। उच्यते च [5]ब्रह्महृदप्रापणं तत्र मज्जनं तत उद्धृतिश्चेति क्रियान्तरसमुदायः[5]। तत्रापि तुशब्देन पूर्वार्थव्यवच्छेदपूर्वकम्। त्वदुक्तरीत्या तु दर्शनात्पूर्वमेव तदानन्दे मज्जनमुक्तं भवति, तच्च नोपपद्यते, हेत्वभावात्। किञ्च, दर्शयामासेत्यनेनैवैतद्दर्शनस्य प्राप्तेस्त्वदुक्तरीत्या पुनस्तस्यैव दर्शनं ददृशुरित्यनेन न वदेत्। तस्मा**दाचार्योक्त** एव ग्रन्थार्थ इति ज्ञेयम्॥ **पञ्चविंशत्यध्यायविवरणं समाप्तम्॥**

## इति साधनप्रकरणम्॥

---

## फलप्रकरणम्।

**षड्विंशाध्याये प्रकरणार्थोक्तौ, ब्रह्मानन्दात् समुद्धृत्येति** । ननु सर्वसमर्थत्वेन

*ब्रह्मानन्दवत्स्वगृहस्थिताभ्य एव स्वामिनीभ्यो भजनानन्दं कुतो नादात्,*

१०-२६-०. लोकवेदत्याजनपूर्वकं विवक्षितरीत्या कुतो दत्तवानित्यत आहु**र्ब्रह्मानन्दा**दिति। तथैवैतद्दाने एतस्यापि ब्रह्मानन्दमध्यपातित्वेन तत उद्धृतेर्वैयर्थ्यं स्यात्, भजनानन्दस्वरूपं चैतादृशमेवेत्येवंरूपानन्द[6]दाने तददत्तमेव च स्यादिति भाव.। ननु स्त्रीभ्य एवैतद्दाने को हेतुः। तत्रापि पूर्वमन्यविवाहितासु। कुमारीष्वतथात्वेपि भगवता समं विवाहाभावात्तन्याय

---

१...१. नन्वेवमाचार्यैः कुतो व्याकृतम्? यथाश्रुतार्थस्यापि सुवचत्वात्। मू. पा.।
२...२. तापहारकत्वेन शुद्धत्वेन च मू. पा.। ३. 'ततो' इति नास्ति मूले। ४. ' 'एवं सति' इति मूले नास्ति। ५...५. ब्रह्महृदप्रापणादि.। मू. पा.।
६. आनन्दादान इति पाठः।

एव । अत एव वरदानान्तरमपि 'लब्धकामाः कुमारिकाः' इत्येवोक्तमित्याशङ्क्य तत्र हेतुमाहु लौकिकस्त्वीति । भजनानन्दो हि स्वरूपात्मकः । तच्च 'रसो वै सः' इत्यादिश्रुतिभी रसरूपम् । स च यादृक् स्वशास्त्रसिद्धस्तादृगेव । तत्र च स्वाविर्भावहितायमेव मुख्यो रस इति निरूपितम् । अतो लोकसम्बन्धि यो लौकिकस्त्वया भगवदतिरिक्तलौकिकविवाहलक्षणसम्बन्ध एव य इति यावत् । एतादृशेषु सम्यक् सिद्धा भवति । तत एत कथाश्रवणेन तद्भावोदये पुरुषेपि स रसो भवेत्, नान्यथेति स्त्रीष्वेव तद्दानमित्यर्थः । सिद्ध इतिपदेनैतद्रसस्वरूपसिद्धिश्चेत् पूर्वं भूलोके स्यात्तदा यत्रापि तत्प्राप्तिः स्यात् । सा चैतास्वेव सम्भवतीति तथेति ज्ञाप्यते ।

किञ्च । लक्ष्मीतुल्यतया हि भगवद्रमणमिति मर्यादा । सा च ब्रह्मानन्दरूपा । तथा च पूर्वाध्याये ब्रह्मभावोक्त्या तद्रूपत्वमुक्तं जातमित्युक्तमर्यादापि सम्पन्नेतीतोप्यत्र रमणमित्याहु स्वानन्दानुभवार्थमिति । यद्यपि स्वामिनीष्वेतावता न कोपि विशेष, तथा "धिक तत्रानुप्रविष्ट [१]न तु तद्वानि'रिति न्यायोत्रापिशब्देन ज्ञाप्यते । तथा च स्वपदस्य स्वामिनीवाचकस्यानुभवपदेन सम सम्बन्धो ज्ञेय । आनन्दपद भजनानन्दपरम् । यद्वा । बलदेवे स्वधर्मानिरूपयता भगवता 'गोप्योन्तरेण भुजयोरपि यत्स्पृहा श्री'रितिवाक्ये श्रियोपि स्पृहानिरूपणेन तस्या अपि दुर्लभो यो रसस्त प्राप्य गोप्यो धन्या इति वचनात्स्त्रीष्वेव स्वानन्दानुभवयोग्यता निरूपिता, नान्येष्वन्यासु वेत्यर्थ । तथा च तत्रैवैतदधिकारवत्त्वात्तथेतिभावः । यद्वा । हेमन्ते प्रथमे मासी'त्यत्र तेषा प्रसादरूपा शक्तिः स्त्री भवतीत्यत्र या शक्तिरुक्ता तत्प्रवेशो यत्र, तत्र प्रभुसम्बन्धयोग्यता, स चैतास्वेव सम्पन्न इति पूर्वं निरूपितमित्यर्थ' । एव सत्येत प्रवेशो यत्र पुरुषेपि भविष्यति, तत्रैवभावो भविष्यतीत्याशयेनाहु तद्वारेति । तासामनुग्रहद्वारेति वार्थ । यत्रापि तत्प्रवेशोनुग्रहो वा तत्रापि स्त्रीत्वमृते नैतद्रसप्राप्तिरित्याहु स्त्रिय एव हीनि । तत्पुरुषरूप भगवन्तमित्यर्थः । नत स्त्रीकर्तृकपानानन्तरं पुमान् भगवांस्तासु प्राकृतेतरसाधिकरणभूतासु तमेव रस पातु शक्त इत्यर्थः । रसाविर्भावे पुंभावत्वेते भावः । यतस्ता एव रसयोग्यास्तत्पाने शक्ताश्चातो न कदाचिद्रमण व्यवधान करोतीत्याहुः अतो हि भगवानिति । आन्तर त्विति । सखीवृन्दे मिथो गुणानुवादे लीलासहितप्रियतमप्राकट्यचेतनान्तर्ये भावविशेषा उत्पद्यन्ते, न ते सङ्गमेपीत्यस्य परत्वम् । 'नामरूपे व्याकरवाणी'ति श्रुते प्रपञ्चस्य द्विरूपत्वेन लीलाप्रपञ्चस्यापि तथात्वाद् गुणगानलक्षणनामात्मकभगवत्स्वरूपस्य परमानन्दरूपभावात्मकरमणलक्षणा लीला प्रिये दोषारोपादिदोषरहिताग्रे निरूप्यत इत्याहु ततः शब्दात्मिकेति ।

१ 'न तु तद्वानि' इति मूले नास्ति ।

सप्तमाध्यायान्यथत्थैषा । शब्दादिकाया अपि लीलायाः प्रवृत्तिनिवृत्तिभेदेन द्विरूपत्वेनोत्तरा सप्तमाध्याये निरूपिता । पूर्वस्याः सदोषत्वादत्रापि तत्पूर्वाध्याये वेदात्मकशेषरूपत्वेन बलदेवस्य तत्साहित्येन कृतलीलायां शङ्खचूडोक्त्या सदोषत्वं तद्वधोक्त्यात्र सापि निर्दुष्टेति ज्ञाप्यत इत्यर्थः । अत एवाध्यायद्वयेन निरूपणमिति भाव ।

यतो रूपं पञ्चात्मकमतस्तदानं पञ्चधातस्तन्निरूपणमपि तावद्भिरध्यायैः कृतमित्याहु तत इति । पञ्चात्मके रूपे येनांशेन या लीला कृता ता ता लीलां क्रमेणाहुः **आत्मनेति** सार्धेन । 'यथेन्द्रियादिरूपत्वं शुद्धस्य ब्रह्मणस्तथा । आत्मत्वादिस्वरूपत्व मन्तव्यं श्रुतिवाक्यत. । यथेन्द्रियादिसङ्घात आत्मनो मुख्यता तथा । प्रकृते स्वामिनीभावप्राधान्यं तत आदिमे । स एवोक्तः प्रभुर्यस्माद्रसरूप श्रुतेर्मत । आत्माधीनं यथा कार्यं सर्वमेवमिहापि हि । भावाधीनमतः प्रोक्तमात्मनेत्यादि सुष्ठु हि । अन्याप्राधान्यतः पूर्वं केवलेनेति तत्तथा । तत्तत्प्राधान्यतस्तत्तल्लीलेत्यग्रे तथोदितम् । मनःप्रभृतिसर्वस्व[1] तासु नास्ति हरे परम् । इति ज्ञापितमेतेन विप्रयोगदशासु वै' । यद्वा । आत्मना प्रथमेत्यादिनोक्त पञ्चविधत्वं प्रत्यध्यायोक्तलीलायामपि ज्ञेयम् । तथाहि । प्रियाभ्यः फलं दातुं तथा रूपप्राकट्य कृत्वा स्थित इति भगवत्पदेनात्मना लीलोक्ता । 'मनश्चक्रे' 'कृष्णगृहीतमानसा' इत्यादिनाऽन्योन्यं चित्तव्यतिषङ्गो निरूपित इति मनसा । ततः 'स्वागतं व' इत्यादिकथनाद्वचसा[2] । तादृग्वचनश्रवणेपि प्राणानां स्थितिस्तु, प्राणरूपेण भगवानेव वाग्द्वारा प्रविष्ट इति प्राणैः सा । अत एव मूले 'प्रतिभाषमाण'मित्युक्तम् । बलं हि प्राणाना धर्मः, एते चालौकिका इति भगवद्वशीकरणलक्षणं बलं संपन्नमिति स्वामिनीगाप्रूपत्वं प्राणरूपत्व चेति तथा । तत इन्द्रियशरीरयो सैति स्पष्टम् । तिरोधानमपि कायिकमिति तथेति प्रथमाध्यायस्थितिः । तिरोधानदशायामेतासामात्मा भगवत्येव प्रविष्ट इति स एवात्मत्वेनैतासु स्थितः कार्यं कृतवानित्यात्मना सा । एवमेव मनःप्रभृतीन्द्रियान्तं ज्ञेयम् । 'नात्मागाराणि सस्मरु'रिति वाक्याद्देहस्मृतिरहिताना पुन पुलिनागमनं स्वतो न सम्भवतीति शारीरी सा । तृतीयेऽध्याये मनोजकर्षहेतुत्वं दर्शनाभावेन वधहेतुत्वं रक्षकत्वमलौकिकत्वे सति ब्रह्मप्रार्थनया प्राकट्य च स्वरूपमात्रस्यैवेत्यात्मना या लीला सा चतुर्भिरुक्ता । ततोग्रे [3]निकटागमनद्विविधरमणमुख्यरसदानानि प्रार्थितानि, तानि चोदीतभावपूर्वकाणि । भावाश्च मनोनिष्ठा इति तल्लीला चतुर्भिरुक्ता । तत एकेन प्राणस्थितिहेतुत्वेन कथास्वरूप निरूपितम् । तत्र वाक्प्राणरूपत्वं स्पष्टम् । ततोग्रे प्रहसितेक्षणादिकं चेन्द्रियकार्यमिति तल्लीलोक्ता । ज्ञानकर्मभेदेनेन्द्रियं द्विविधमिति

१.—सर्वं स्व सू पा ।

२. वाचा सेति मूले पाठ । ३.—गमनाद्विविधेति तु छिन्नपदपोऽशुद्धः पाठो मूले नास्तिः ।

श्रुतेरेतावत्सर्वतो भगवता कृतम्, न तु साधनबलेनैतास्वित्याहुः स्वजमिति । तर्हि नादेनाकारणं गमनबोधनादिकं चानुपपन्नमित्याशङ्क्य, तत्रोपपत्तिं वदन्तो भगवान् लीलां कुर्वन् शास्त्रमर्यादामपि प्रदर्शयतीत्याशयेनाहुः ते चेरसमर्पितात्मान इति सार्धेन । सर्वात्मभाववन्तश्चेद् भक्ता भवन्ति, तदैवायं रसः प्राप्यो, नान्यथेत्यर्थः । एतेनैतास्वेवैवं रमणं कुतो नान्यास्विति शङ्कापास्ता । सोपि भगवत्कृत एव भवति, नान्यथेति ज्ञापनाय तदुपायरूपरिंरसाचन्द्रोदयगाननिषेधवचनान्युक्तानीत्याहुः तत्रोपायश्च रूप्यत इति । तत्र समर्पितात्मत्व इत्यर्थः । अन्तर्गृहगतकथयैतद्भावरहितानां नैतत्प्राप्तिरित्यत्र निदर्शनमप्युक्तमिति चकारार्थः । मानतिरोधानाभ्यामन्यापि सा मर्यादा ज्ञाप्यत इत्याहुः आत्मेति । लडर्थे लुङ् छान्दसः । रसमर्यादामग्रे स्वयमेव वदिष्यन्त्यन्त्यश्लोकद्वये । अन्तःप्रपत्त्यभावे बाह्यतस्तिरोधत्ते । तत्र हेतुरन्तःकरणसम्बन्धीति । यथा पतिपुत्रादिः शरीरसम्बन्धी, तथा हरिः सर्वभावप्रपत्त्येकलभ्य इति, सा चान्तःकरणधर्म इति तथा । तथा च हेत्वभावे कार्याभावो युक्त इति भावः । तिरोधानमपि मानजदुःखहरणार्थमेवेत्याहुः हरिश्च स इति । अत्र हरिपदस्यायं भावः । 'एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः । नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासी'दिति वाक्यात् यथान्यैररक्षणे जाते स्वयमाविर्भूय रक्षितवान्, एवमन्वेषणादिसाधनानामसाधकत्वेतिदैन्ये[1] सति तन्निवारणाय स्वयमाविर्भूय सर्वं कृतवानिति । अथवा । अन्तःकरणसम्बन्धी सन् तत्र स्थितः सन् बाह्यतस्तिरोधत्त इत्यर्थः । यद्वा । मानस्यायं हि सहजो धर्मो यन्नायककृतिरस्कारोऽवचनानीक्षणादिभिः, प्रकृते च तत्कार्यं स्वयमेव प्रभुः कृतवान् । न केवलमप्युनैवं, किन्तु सार्वदिकोयं व्यवस्थेत्याहुः सोऽन्त करणेति । सः पूर्वोक्तसमभावात्मक एव प्रभुः स मानात्मकः सन्नन्तःकरणसम्बन्धी चेत्तदा बहिस्तथेत्यर्थः । यद्वा । कायिकचेष्टया मानापनोदनं कुतो न कृतवानित्याशङ्क्य तत्र हेतुमाहुः स इति । अन्तर्ज्ञानादिकार्यकरणं येनेत्यन्तःकरण आत्मा तत्सम्बन्धी यतोऽतस्तथेत्यर्थः । आवेश्यात्र आत्मन्येवैतदात्मनि स्वानन्दं पूरितवानित्यन्तरेव च सोस्तीत्यन्तरेव प्रविश्य [2]तद्धर्मापनोदनं कृतवानित्युच्यते । यदा कायिकमानन्ददानं करिष्यति, तदा बहिरेव तथा करिष्यतीति भावः । अत एव गीतगोविन्दादिषु तथैव गीयते । हरिरिति पूर्ववत् ।

आद्यश्लोके सर्वास्वेव रात्रिष्वित्यादि । ननु तासां रात्रीणां मिलनाद् दिवापि सत्त्वेन तेष्वप्येतद्रात्रिप्राकट्यं कृत्वा रमते, उत लौकिकीषु रात्रिष्वेव तथा कृत्वा
१०-२९-१. तथेति शङ्कानिरासायाहुः सर्वास्वेवेत्यादि । यावतीषु ता आरोपितवांस्तावतीषु

१.—मतापनस्तेनातिदैन्ये मु. पा. । २. तद्धर्मापनोदं मु. पा. ।

सर्वासु रात्रिष्वेव लौकिकीष्वित्यर्थः । अन्यथैव शशाङ्कांशुविराजिता' इति श्लोकेन लौकिकीनां तासामतिदेशो न सङ्गच्छेत । दिवापि तथोक्तौ दोहनपयोधिश्रयणसंयावसिद्धादिकं गोपाना दिवा गोचारणादिपराणामेतासु स्वपार्श्वस्थत्वेन माननं च न सङ्गच्छत इति भावः । **पूर्णत्वादिति** । रसशास्त्रीयाभि सर्वाभिः कलाभिः पूर्ण वादित्यर्थः । सकलकलापूर्णभगवन्मनःसम्बन्धिचन्द्रस्यापि सदा तथात्वानामु स प्राकट्य करणेन तथा वकरणमित्याशयेनाहुः **पूर्णिमेत्यादि** । अन्यदा सदोषस्य जगदेर्दोषनिवर्तकत्वं कमलादिलक्षणगुणाधायकत्व च शरदो लोके दृश्यत इति तस्याममाधारणो धर्मोऽस्तीति ज्ञायते । इहापि रसानुपयोगिवस्तुनिरासपूर्वकं भगवद्भावपोषिका ऽलौकिकी शाद्रविषयेति तामेव कृतवानित्याहुः **ऋतुमपीति** । पुंसां सदोषभावस्त्रीणामप्यत्र न प्रवेश इत्यपि ज्ञापयितुं वसन्तादीनां प्रावृपश्चात्तरगमिति हृदयम् । ननु रात्रीणां नित्यत्वेन तद्धर्माणामपि नित्यत्वात् तासा कान्ता मकत्वेनत्वरत्वभावाच्च तत्करणोक्तिर्विवरणे कथमुपपद्यते । न च [1]मनस इत्वेति वाच्यम् । तथात्राश्रुतेरिति चेत् । इत्थम् । अत्र हि वीक्षणस्य तथामनःकरणे हेतुत्वमुच्यते । तथा च सर्वविषयकापरोक्षनित्यज्ञानवतो नित्यरात्रिदर्शनस्यापि तथात्वेन तत्कार्यस्यापि तथात्वापत्तौ तत्समाधानाय वीक्षणे पूर्वस्मादिविशेषो वाच्य. । स चात्र विषयरूप एव वक्तुं युक्तः । स च विशेषणांश एव । पूर्वं तस्यानाविर्भावनादधुनैव तथाकरणादसोदोपिकां सामग्रीं प्रभुरेव [2]कृतवानिति **सुस्फुटमाचार्यैं करवेति** । यद्यपि विशेषणस्यापि नित्यत्वेनोक्तदूपणानुद्वारस्तथापि भक्तानामपि दर्शनयोग्यता तत्र सम्पादितेति तथा । नायकभावेनेक्षणमेव विशेष इति ज्ञेयम् । अत एवोपसर्गो वीति । वस्तुतस्तु तल्लक्षणसम्बन्धिनी लीला निर्दिश्योच्यत इति नानुपपत्तिः काचित् । यद्यपीत्यादिनाऽपिशब्दार्थ उक्तः । **तथापि मर्यादेति** । रसमर्यादेत्यर्थः । **एवं कार्ये योगमायाया इति** । भजनानन्ददानलक्षणे कार्य इत्यर्थः । **अन्यत्र स्थितं ममाणम्** । वेदात्मानं सङ्कर्षणं देवक्या स्थितं रोहिण्यां योजितवतो, स्वयमाविर्भूय मथुरायां स्थितमानन्दरूपं प्रभुं गोकुले, तथात्रापि पूर्वं गोपाना गृहेषु स्थिता क्रचोधुना भगवति योजयति, भगवति स्थितमानन्दं च तास्वित्यर्थः ।

अत्र कश्चिदाह । आनन्दस्य सुखरूपत्वादमूर्तस्यान्यत्र गमनासम्भवात्प्रियसङ्गनिमित्तकः स्वामिनीषु सुखविशेष उत्पन्न इत्येव वक्तुं युक्तम्, अतो योगमायाश्रयणनिमित्तकथनमनुपपन्नमिति । स वक्तव्यः । 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिश्रुतिभ्य 'आनन्दमयोऽभ्यासा'दित्यादिन्यायेभ्यश्च धर्मिग्राहकप्रमाणभूतेभ्य आनन्दमयत्वं भगवत्स्वरूपे मन्तव्यम्, अनिच्छतापि त्वया । तथैव चिद्रूपस्य धर्मरूपभग-

1. म इति टिप्पणपाठ: ... । २. प्रवतितवानिति पदो मूले नास्ति ।

शब्दार्थज्ञानरूपत्वव'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति न्यायाद्धर्मरूपतापि । तथा च 'तदेजती'ति श्रुतेस्तस्य गतिरूपत्वमप्यङ्गीकार्यम् । अत एव व्यापकत्वेपि गतिलीलोपपद्यते, दामोदरलीलेव । वस्तुतस्तु स्वरूपमर्यादामप्यतिक्रम्य भक्तार्थे लीलां करोतीति नानुपपत्तिः काचित् । अत एव 'रसं ह्येवायं लब्ध्वानन्दी भवती'ति श्रुतिः । सर्वात्मभावलक्षणः स्थायिभावो रसस्तमेव लब्ध्वानन्दवान् भवति । तादृशे प्रभु'स्वरूपानन्दं ददातीति तथा लाभकथनेन भगवद्दत्त एव प्राप्यते, नान्यथेति सूच्यते । एवकारः सर्वत्रानुषज्यते । तथाहि । रसमेव लब्ध्वा तथा । तं लब्ध्वा तथा भवत्येव । तथा भूत्वा आनन्द्येव भवति, न तु लौकिकदुःखयपीति च । **अतः प्रमाणातिरिक्तमार्ग** इति । प्रमाणमार्गातिरिक्तो मार्ग इत्यर्थः । यतोऽन्यत्र स्थितं प्रमाणमन्यत्रापि योजयत्यतोऽन्यभजनरहितं विवाहितपतिभजनं विदधच्छास्त्रं तत्त्यागपूर्वकं भगवत्सेवामेव विधत्त इत्यर्थस्तु स्वामिनीनां तथा भजनेन तेन च फलसिद्ध्या 'या माभज'न्निति वाक्येन भगवता प्रत्युपकृतित्वेन कथनात्फलरूपेण चाधुना ज्ञाप्यते । तस्य मार्गत्वं च । अन्यथोन्मार्गत्वमेव भवेत् । अस्त्वेवमेतदित्यादिना प्रतिपादितं च ताभिः । ईश्वरवाक्यस्याखिलप्रमाणाधिकबलवत्त्वेपि स्वामिनीवाक्यैर्दुर्बलत्वमपि प्रमाणातिरिक्तो मार्ग इति ज्ञेयम् । यद्वा । प्रभुप्राप्त्यर्थं गुरूपसत्तिस्तदुक्तकरणं च भक्तानां प्रमाणमार्गः । प्रकृते च स्वामिनीप्राप्त्यर्थं योगमायाश्रयणादिकं प्रभुः करोति करिष्यत्यपीति प्रमाणातिरिक्तो मार्गः, यतोऽन्यत्र प्रतिष्ठितमानन्दमन्यत्र योजयत्यत एतद्भावेन भजनरूपोत्कटस्नेहजविरहभावेन सर्वत्यागपूर्वकं स्वदेहादिविस्मृतिपूर्वकं भगवदन्वेषणपरत्वलक्षणश्च भक्तिमार्ग इत्यर्थः । इदं च द्वितीयतृतीयाध्यायादिषु स्पष्टम् । एवं सत्यस्मिन्मार्गे स्वामिन्य एव गुरव इति ज्ञापितं भवति । स्वामिनीनां विप्रयोगभावे सौभाग्यमदादिर्हेतुः । तत्र च भगवद्धर्मप्रवेश[1] एव हेतुः । अन्यथा पादरजःप्रपन्नानामेतासां मदो मानश्च न स्यातामिति भावः । नन्वेवं 'शशाङ्कांशुविराजिता निशा' इति वाक्याल्लौकिकीष्वपि रात्रिषु रमणमिति ज्ञायते । एवं सत्यलौकिकीत्वपरिग्रहे गौरवं विरोधागमश्चेत्याशङ्क्य लौकिकीनामपि तासां स्वरूपमाहुः **याश्च रात्रय इति । निर्मिता** इतिपदात्सर्गादावेवैतदर्थमेव भगवता सृष्टाः काश्चन रात्रयो भगवत्येव स्थिता एतावत्पर्यन्तं, लीलासमये लौकिकीष्वेव रात्रिषु स्थापयित्वा तां कृतवानिति ज्ञाप्यते । लौकिकेन्दुप्रकाश्यत्वेन गीतगोविन्दाद्युक्तप्रकारेण लौकिकरीत्यैव रमणेन चैतासां लौकिकीत्वमुच्यते । [2]तासु विवक्षितेन्दुप्रकाश्यत्वेन नायकमानोक्त्या नायकाप्रणिपातोक्त्यैतन्माननायकान्तर्धाननायिकादैन्योक्त्यैतद्धेतुकतदाविर्भावे तदधीनत्वोक्त्या प्रश्नोत्तर

---

१. भवद्धर्मप्रवेश मू पा. । २. तासामिति पाठः पर मूले नास्ति ।

परोक्षभजनोक्तौ पूर्वमननुभवेपि प्रत्यक्षत्वेपि तदनुभवतत्रागिच्छामोक्षया भगवद्विचारितानुपूर्वीकस्वरजायुत्नयनादिभिश्चालौकिकरीत्यैवालौकिकरसदानमिति ज्ञायते । उक्तार्थेषु लौकिकवैलक्षण्यं स्पष्टम् । एवं सति स्वरूपत एव चालौकिकत्वमितिविवेकः । एवं कथन उपपत्तिमाहु अन्ययेति । साधारणीनां रात्रीणां तल्लीलाश्रयत्वे तासां सर्वत्रैव तुल्यत्वात् सर्वेषु देशेषु सर्वेषामेतदानन्दप्राकट्यं स्यादित्यर्थः । अन्ययेत्यस्यैव विवरणं साधारणीत्यादि । भूम्येकत्वेपि लीलाश्रयभूम्यधिष्ठानत्वेनास्या नानुपपत्तिरिति भावः । ननु सर्वज्ञस्य शक्तिदर्शनमपि सार्वदिकमिदानीं यदधुना को विशेष इति चेत्तत्राहुः शरदि कृतान्नित्यादि । विशिष्टदर्शनं विशेष इत्यर्थः । ननु विशेषणस्यापि नित्यत्वात् तथेति चेत् । सत्यम् । यादृशी लीलोच्यते तादृश्या एव नित्यत्वादधुनैवोक्तविशेषणवैशिष्ट्यमभियुक्तेपि न दोषः । एतद्यथा तथा विद्वन्मण्डने निरूपितमस्माभिः । ईश्वरस्यान्याश्रयणं हि लौकिकी रीतिः, तदुक्तत्वात्[1] तद्रीत्यापि रमणं सूच्यते । एवं सति मध्यस्थत्वेन तदा तस्या विशेषत उपयोग इति तदाश्रयणमुक्तमिति ज्ञेयम् । किञ्च । स्वाशक्ये ह्यर्थेऽन्याश्रयणं क्रियते । तथा च सर्वसमर्थस्यापि स्वानन्ददानसमये ईश्वरत्वादिधर्मज्ञानं सम्पादयितुं रसपरवशत्वेन न कर्तुं शक्यं, गोपानां चैतल्लीलाविषयकाज्ञानं तथा, आगमनसमये निषेधोक्त्या तज्ज्ञानस्य कथनात् । [2]अत एतदादिकार्यसिद्ध्यर्थं योगमायाश्रयणमलौकिकरीत्या रमणेपीति ज्ञेयम् । अत एव 'मोहितास्तस्य मायया' 'मन्यमानाः स्वपार्श्वस्था'निति वक्ष्यति । अत एव रसोपयोगि यद्यत्कार्यं तत्तदा[3] तदा सम्पादयितुं शक्तेयमिति स्वनिकट एव मूर्तिमत्यास्तस्याः स्थापनमिति ज्ञापनायोपेत्युपसर्गः । एतदेवोक्तं समीप एवाश्रियेत्यनेन ।

तदोडुराज इत्यस्याभासो नूतने तस्मिन्नित्यारभ्य समञ्ज इत्यन्तः । अत्रेदं प्रतिभाति । आश्रितत्वोक्त्यात्रेश्वरत्वमर्यादामुल्लंघ्य भगवानधुना प्रवृत्त इति
१०-२९ २. ज्ञायते । अन्यथा रसमर्यादोच्छित्तिः स्यात् । एवं सति यदवधि सर्वविकाररहित्येन नैवंविधं मनः प्रकटितमिति सर्वथैतादृशत्वं तस्य नूतनत्वम् । लौकिकीं रीतिमनुसृत्यैवतत्तद्देवतापेक्षापि घटते । लोके देवताधिष्ठितस्यैव कार्यक्षमत्वात्, अन्यथा नियामकाभावेन सामर्थ्याभावेन चान्येनैव यथापूर्वमेव भवेत्, न तु रसैकवशवश सदा । अत एव गजेन्द्रलील इति वक्ष्यति । करिणीस्पर्शमात्रेण परवशत्वं तत्र प्रसिद्धम् । युक्तं चैतद्विभावादिकं विना न रसपोष इति । 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति वात्स्यायनसूत्रात् । वस्तुतस्तु 'रसो वै सः' इत्यादिश्रुतिभ्यो रसरूपत्वात्प्रभोः स यादृशस्तच्छास्त्रसिद्धोऽस्ति तादृशो निरूप्यत इति

१. तदुक्तत्वात् मू. पा । २. तदन्न इति पाठोऽवाच्यः ।
३. तत्तदा मू. पा. ।

नानुपपत्तिः काचित्। अत एवैवंभूतस्यैव नित्यत्वमपि। एतद्विद्वन्मण्डने द्रष्टव्यम्। तस्मात्सुष्ठूक्तमनधिगतं चेत्यादि। ननु चन्द्रस्योदयकर्तृत्वं मूले प्रतीयत इति भगवत सृष्टिकर्तृत्वोक्तिरत्र विरुद्धेति चेत्। न, अनवबोधात्। यदा मनश्चक्रे तदैव य उडुराजोऽर्थादुत्पादितः स उदगादिति मूलार्थस्य विवक्षितत्वात्। अन्यथा तदेति न वदेत्। सोऽप्युदगादित्येव वदेत्। किञ्चाग्रिमश्लोकोक्तचन्द्रदर्शनान्यथानुपपत्त्यैव चन्द्रोदयप्राप्तेरेतच्छ्लोकवैयर्थ्यापातः। एवं सति चिकीर्षितलीलाया वेदलोकयोरप्रतीतत्वेनापूर्वत्वात्त सामग्र्यप्यपूर्वैव सर्वा सम्पादितेति ज्ञापनाय तदेत्युक्तिपूर्वकं तदुदयवर्णनमिति ज्ञायते। अत एव भगवन्मनश्चन्द्रस्येत्यारभ्य कदाचिदपीत्यन्तो ग्रन्थो युज्यते। अन्यथा मूले पूर्णत्वादिधर्माः कण्ठोक्ता नेत्याचार्या अपि न वदेयुः। अत एव पूर्वश्लोके मनसोपि करणमुक्तं चक्रे इति पदेन। क्रीडायां मनस एव मुख्यत्वात्तस्य नूतनतया करणोक्त्यैव सर्वस्या अपि सामग्र्यास्तथात्वं ज्ञातं भविष्यतीत्यभिप्रायेण। एवं सति तादृशं चन्द्रं च प्रभुः ससृज इति हेतोरग्रे तदुदयमाह। शुक इत्याभासार्थो ज्ञेय। तथापि क्रमेणैवेति। अन्यथा रजन्येवेति प्रभुर्न वदेदिति भावः। नन्वस्या राज्या नित्यत्वेनैकयेव चारितार्थ्ये बह्वीनां तासां परिग्रहः किमर्थ इति चेत्। अत्र वदामः। नायिकाविशेषेषु प्रतिपदादितिथिनियतकर्तव्यताकचन्द्रादिविशेषैरेव रसः प्रादुर्भवतीति वात्स्यायननयसिद्धत्वात्तदर्थमेवोक्तरूपाणां तासां परिग्रह इति। रात्रीणामलौकिकत्वेन प्राकृतनक्षत्ररक्तत्वेऽप्येतदात्रिप्रकाश्योडूना चाप्रसिद्धत्वेपि यदुडुपदोपादानं तत्त्वेतद्रात्रिष्वेव प्रकाशमानत्वेन [1]स्वामिनीना मनांस्येवात्रोडुत्वेनाभिमतानीत्याहुः सोऽपि चन्द्र इत्यादिना। इन्दोर्नक्षत्रसजातीयत्वं 'नक्षत्राणामहं शशी'तिवाक्यात्सिद्धम्। एतन्मनस्सु तत्त्वोक्त्यैतच्चन्द्रसजातीयत्वं सूच्यते। तच्च भगवन्मनःसम्बन्धित्वम्। तत्त्व चात्र भगवन्मनोंऽशत्वं स्वमनःप्रवृत्तिनिवृत्तितोषादिकार्यार्थमाविर्भावितत्वं च। प्राच्याः ककुभ इत्यत्र, प्रतिस्पर्धिन्यामिति। प्रतीच्या दिशी यर्थः। उत्तरसन्ध्यायामखिलदिशोपास्यत्वेनेयमेव दिङ् मुख्येति मर्यादामार्गीयत्वं लक्ष्यते। रविश्च तथा। अतस्तेन तत्र रागसम्भव। यत्रोक्तरूपेन्दुप्राकट्यं सा दिक्पुष्टिमार्गीयेति तस्या एतत्प्रतिस्पर्धिनीत्वम्। एतेन मर्यादामार्गे ताप एव, पुष्टिमार्गप्रवेशो तन्निवृत्तिरिति सूचितम्। प्रातः प्राच्या अपि तथाभूताया एवाधुनैवंभूतात्वकथनात् अधुना प्रभोरेवेन्दुत्वेन तदेवनात्वेनाप्यस्यास्तस्याः सकाशादुत्कर्षः। पुष्टिमार्गोत्कर्षमेव प्रभुः करोति, नान्यत्रास्मादुत्कर्षं सहत इत्येतत्सर्वं हृदि कृत्वा तस्या मुखे न राग इत्याद्युक्तं प्रतिस्पर्धिनीत्वमप्युक्तमिति ज्ञेयम्। स चर्षणीनामित्यत्र। इदं ज्ञेयम्। चृष्[2] प्रजननैश्वर्ययोरिति पाठादयं धातुगविर्भावन ईशधात्वर्थे गमने च शक्तः। अथवैशस्य

१. स्वामिनीमनांस्ये—मू. पा। २. चृप् मू. पा.।

मात्र पेयं तत्र तथा । प्रकृते तु[1] सर्वासमावेकरूपरमाधिकारिमात्रसृष्टत्वेन याः शक्तयोऽधिकृतास्ता भगवदाविर्भावं ज्ञात्वा तादृशाविर्भावस्य फलमिदं [2]प्रतीक्षमाणास्तत्पर्यन्तमन्यभावेभ्यस्ता रक्षन्तीति चर्षणीशब्देनोच्यन्ते । यद्यपि शाब्दिकैरयशब्दस्य गत्यर्थकत्वमेवोक्तं, तथापि गत्योरित्यनुरूपा यदृश्ययोरित्युक्तं तत् भोग्यर्थोऽत्र ग्रेय इति ज्ञापनायेत्यस्माभिस्तथोक्तम् । गमनार्थत्वे तु यत्र ता आविर्भावविनागतत्र गत्वा तत्फलमिदञ्चनुकूलत्वेन नयन्तीति भवन्तीति तथा । तथा च स्वस्वामिनीषु भगवद्भोगयोग्यास्वपि तद्विलम्बे दृष्टेनैवदाति च चर्षणीनां परमस्नेहवशाच्छोकोऽजनि । एवं सत्ययमिन्दुः प्रियसंगाभावजदुःखं स्वामिनीनामपनयन् केवलानां तदपनयति, किन्तु चर्षणीसहितानामिति मूलार्थः सम्पद्यते । स्वामिनीदुःखनिमित्तकस्तासां शोक इत्येतद्दुःखनिवारणेनैव तासामपि स निवर्तेत इत्यमुल्यत्वात्सद्भावं स्तासामुक्तः । एतदिन्दुस्वाभाव्यादेतदुदये संगमनिश्चयेन च तन्निवृत्तिः । इदमेवोक्तं चर्षणीसहितानां जीवानां चेत्यादिना । आद्यपक्षे तु यत्सम्बन्धिनामेव परमानन्दानुभवस्ताः शक्तयः स्वयं तदर्थिन्यो भगवद्भक्तेष्वेतदतिरिक्तेष्वेतावत्कालपर्यन्तं परिभ्रान्ताश्चर्षणीशब्देनोच्यन्ते । मुक्तौ तदभावं ज्ञात्वा तादृशेभ्यः स्वयमेव निवृत्ता भवन्ति । भगवतैव तादृश्य एव ताः सृष्टा इति तेषु न प्रवेश इति ज्ञापनाय न रमन्त इत्युक्तम् । अत एवाग्रे स्वत एव निवृत्ता भवन्तीत्युक्तं, न तु निवर्तिता इति । तथा चैतदुदये तच्छोकनिवृत्तिर्जातेति तथा । अस्मिन्पक्षे पुनश्चन्द्रपरामर्शस्य प्रयोजनाभावादेकस्मिन्वाक्ये वारद्वयं तत्कथनासम्भवात्पूर्वमप्रसिद्धत्वेनास्येन्दोः प्रसिद्धचर्षणीकत्वमपि तच्छब्दस्य न वक्तुं शक्यमित्यरुच्याग्रिमः पक्ष उक्त इति ज्ञेयम् ।

दृष्ट्वा कुमुद्वन्तमित्यस्याभासे, तस्य शब्दयोनित्वं निरूपयन्निति । वाचः पूर्वरूपं हि मनस्तच्च समानाधिकरणाया एव तस्यास्तथा । प्रकृते च गान
१०-२९-३. एतच्चन्द्रदर्शनस्य हेतुत्वोक्त्यापि गानसमानाधिकरणमनोधिष्ठातृत्वं तत्र ज्ञाप्यत इति भावः । न चैवं वनेऽपि तत्त्वापत्तिरिति वाच्यम्, विशेषणस्यैव तत्र प्रयोजन[3]कत्वेनोक्तेः । रमाननाभमित्यत्र, लक्ष्म्या अयं भ्रातेत्यादि । भगवान् रमणेच्छायां तद्रसपूरणार्थं ब्रह्मानन्दं लक्ष्म्यात्मकनायिकारूपमाविर्भावितवान् । तस्यैव रमणस्थानत्वात् चन्द्रोऽपि तथैवायमाविर्भावित इत्यस्य तद्भ्रातृत्वमत एव समानाकारत्वमिति भावः । नवकुङ्कुमारुणमित्यत्र, नवपदस्य तात्पर्यमाहुः विवाहसमय इत्यादि । कलत्वे गानस्य हेतुमाहुः यदि व्यक्तमित्यादि । यद्यपि स्वरूपादिदृक्षा न तच्छ्रवणनिवर्त्या, तथापि गीतस्यार्थः स्वरूपमेवेति, तच्चार्थसंयुक्तमेवेति गीतस्य व्यक्तत्वेऽर्थस्यापि तथात्वं

1. 'तु' इति नास्ति मूले । 2. प्रतीक्ष्यमाणा इति पाठोऽशास्यः । 3. प्रयोजकत्वे—मू. पा. ।

स्यात् । तथा च 'तदनङ्गवर्धन'मितिवाक्यात्स्वरूपरसानुभवेच्छाया एवोद्भूतत्वेन तदनुभवेनैवागमनप्रतिबन्धः स्यादिति भावः, वामदृशामित्यत्र । यासां पुनर्दृष्टिरित्यादि । पुष्टिमार्गानुसारिभजनपरत्वमेवोत्तमत्व दृष्टेः । अन्यथा चार्वादिपदान्यपहाय वामपदं न वदेदिति भावः ।

निशम्य गीतमित्यत्र, यद्यपीति । उपक्रम एतत्सम्बन्धिरात्रिदर्शनस्यैव
१०-२६-४ रिरंसाहेतुत्वेनोक्तेरिति भावः । तथापीति । तदनङ्गवर्धनमितिवचनाद्-
भगवदीयोनङ्गो यत्रास्ति तं तत्र वर्धयत्येवे येतास्वपि स्थितः, स तेन तथा
कृत इत्येता आयागता इत्यर्थः । अत एव वर्धकत्वमुक्तं, न तु जनकत्वमिति भावः । एतदेवोक्तमाह्वानं सदृशमित्यनेन । पूर्वापेक्षयाधुनात्युत्कटो जात इत्याशयेन नूतन उत्पन्नः काम इत्युक्तम् ।

दुहन्त्यः इत्यस्याभासः । प्रसङ्गादित्यादि । अत्र पक्षद्वयं सम्भाव्यते । कुमारी-
णामेवाह्वानं मुख्यमित्येक अविशेपेण तयेत्यपरः । तत्राद्ये प्रसङ्गादित्यादि ।
१०-२६-५. द्वितीये तासामित्यादि । एवमग्रे पि । गुणशब्दोत्र सर्वत्र भावपरो ज्ञेयः ।
भाववैलक्षण्यज्ञापनाय तथोक्तिः । जाती यादि । धर्मपदं त्रिष्वप्यनुषज्यते ।

दोहनाद्यपेक्षयाञ्जनस्यान्तरङ्गत्वाद-यस्मिन्मण्डने सत्यप्येतद्विना तेषां सौन्दर्या-
जनकत्वादसम्पूर्णस्याशोभाजनकत्वाच्च मुख्यत्वमिति तस्यागोऽशक्य इति
१० २६-६. तत्करणादुर्लभाधिकार इत्युक्तम् । ज्ञानमार्गशोधिका इति तु शाङ्करीत्यां
बुभुत्सूनां बोधायोक्तम् ।

काश्चित्कृष्णान्तिकमित्यत्र, तन्मध्येपीति । अन्यथा पूर्ववाक्ये काश्चिदित्युक्त-
त्वाद्द्वादित्यत्यासस्य जवक्तस्य सर्वसाधारणत्वादग्रे काश्चिदितिपदमसम्नद्धं
१०-२६-७. स्यादिति भावः ।।

अन्तर्गृहगता इत्यस्याभासे, यासां[1] काल इत्यादि । नन्वासां भक्तत्वात्कालस्तथा
कर्तुं न शक्नोतीति चेत् । अत्रेदमाकूतम् । 'उक्तं पुरस्ता'दित्यस्य द्वितीय-
१०-२६ ९ व्याख्यानानन्तरं 'यासां साक्षा' दित्यादिनोक्तप्रयोजनार्थं प्रतिबन्धोवश्यं कार्यः ।
भगवांस्तु भक्तानां स्वप्राप्तिप्रतिबन्धं न साक्षात्करोतीति वस्तुस्थितिः । अतोधिकारी 'कालः प्रभुकार्यं कृतवानिति नानुपपत्तिः काचित् ।

उक्तं पुरस्तादित्यत्र, उक्तं निर्गलितार्थमाहुर्यथाशास्त्रमित्यादिना[2] । अन्यथा
चैद्यस्यापि पक्षसमत्वेन नेदमुत्तरं स्यादिति भाव । एतेनाद्यश्लोकार्थ उक्तः ।
१०-२६-१३. भगवानित्यादिनाप्रिमाणाम । किञ्च । पूर्वं ज्ञानभक्त्योरपि हेतुत्वमङ्गीकृ-

१. येषा मू. पा. । २. यथाशास्त्रद्वयमित्यादिना मू पा. ।

ग्योक्तम्, अधुना त्वाविर्भावनैव त अयथासिद्ध इति स्वरूपेणैव सर्वथा मुक्तिमित्याहु' ज्ञानभक्तयोरित्यादिना ।

भगवतो नृपेयत्र, सर्वैश्वर्यसम्पन्न इत्यारभ्य निरपेक्ष इत्यन्तेन प्रथम
१० २६ १४ भगवच्छब्दार्थत्वं विवृत प्रकृतोपयोगि भवति ज्ञेयम् ।

काम क्रोधमिति यत्र । न त्ववतारसमये पूर्वोक्तभक्तनिमित्त पृथगाविर्भावापेक्षितोऽथवा तनैव तत्फलमात्रमिति स देह निर्णयमाहु एकस्यैनि । उक्तस्थळे तनैव
१० २६ १५ तत्फलसाधन न पृथक्तदपेक्षैयकस्यैवाविर्भावस्योभयरूपत्व भवति । यत्र विनियुक्तस्यान्यत्र विनियोगो न न्यायसिद्ध इत्याशङ्कानिरासाय 'निर्णायकन्यायमाहु' संयोगेत्यादि । यथा हैम एव नियुक्ता जुहू पर्णमयत्वगुणयोगात्पापश्लोकश्रवणाभावमपि साधयति, न चेतदर्थं पृथक्सा तन्मयी क्रियते, यस्य पर्णमयी जुहूर्भवति न स पाप श्लोक शृणोतीति श्रुत्या होमार्थाया एव तस्यास्तस्या फलस्य साधकत्वोक्ते, तथा प्रकृतेऽपि भूम्यादिवत्क्वचित् यत्निमित्तमाविर्भावस्यैव तत्तद्भक्तयोगे तत्तत्फलसाधकत्वमिति न पृथक्त्वा पेक्षेत्यर्थः । अत्रेदमपि ज्ञेयम् । पुष्टिमर्याद भेदेन द्विविधानामपि भक्ताना फलसाधन सवशक्तिकस्यैवपूर्वकमवताणेन पूर्णेनैकनैव स्वरूपेणैव[2] कर्तुं शक्यम् । तत्रापि केवल मर्यादामार्गस्थापनायाविर्भूतेन पुष्टिमार्गीयभक्तेष्टपूरण न क्रियते । एव केवलपुष्टिमार्गीयेणाप्याविर्भावेन । अत एव दण्डकारण्यस्थर्षीणामिष्टपूर्तिर्न रामचन्द्रेण कृता । श्रीमद्गोकुलचन्द्रेण च यज्ञपत्नीना पृष्टिलोकगामिनिकारात् । अग्रे मथुरादिषु प्रद्युम्नात्मरूपेण लीलाकरणात्तत्तदनुरूप फलदानमिति । नित्य इरावियत्र स हि सर्वेषु स्वहनति । भावनाविषयत्वभावादेव न दुर्लभ नमित्यर्थः । नियामेत्यादिना तमेवार्थ विवृतम् । तथा स्फुरण उपपत्तिमाहु सर्वत्र भगवदावेशादिति । अतिविगाढभगवद्भावनाया देहेन्द्रियप्राणान्तःकरणजीवेष्वपि तदावेशात्तेषु तथा स्फूर्तौ तत्सम्बन्धिष्वपि तथैव भान मित्यर्थः । एतदेव जीव इत्यादिना विवृतम् । ननु प्रश्नोत्तर श्लोकाभ्यामेव सम्पन्नम्, अतो नापि श्लोकेन स एवार्थ पर्यवस्यति यत कथन व्यर्थमित्याशङ्क्य तत्तात्पर्यमाहु तादृशीमिति । एव बोधनार्थमित्यर्थः* ।

ता दृष्ट्वा यत्र यास्त्विति यदि । अन्तर्गृहगता अनाकारिता एव नाद शुश्रुवुक्ता इति प्रतिबन्धोऽभूदतिशङ्कानिरासायाहु या पूर्वोक्तास्ता अप्याहूता । तत्रो-
१० २६ १७ पपत्तिमाहु समागता इति । अन्यथा तथा न स्यादितिभाव । गेहस्य देह सम्बन्धित्वात्तस्य नष्टत्वेनैतासा गृहाभावात्तत्र गमन वारितमिति न निवार्यन्ते । दीपनिवा

* निर्णायक न्याय—मू. पा । २ स्वरूपेण मू. पा ।

रणार्थं प्रतिबन्ध इत्युक्तम् । यावद्भिर्गुणैर्भगवद्रमणं भवति तावद्गुणसम्पन्ना अन्यत्र विवाहतो रसशास्त्रोक्तरसविशेषोपयोगिगुणवत्यश्च याः समागतास्ता अपि यद्यपि न निवारयितुं योग्यास्तथापि स्थातुमशक्ताः सत्यः स्वतो नागताः किन्तु शब्दश्रवणे सति । तथा च तावानंशो निवारणीय इति शब्देनैव निवारण कृतं, न तु हृदा । तदनङ्गीकारेण शब्दोपाधिकमागमनं चेत् स्यान्निवृत्तिरपि स्यादिति तदभावो ज्ञाप्यत इत्याहुर्या. पुनरित्यादिना । एवं करणे हेतुमाहुरन्यशेषतयेति । एतेन भक्तिमार्गमर्यादा ज्ञापितेतिभाव । अपावृता इति । अन्तर्बहिर्विसंवादो नागरीणां कदाचिद् भवेदपि, न त्वेतासाम् । व्रजसम्बन्धेनान्तरधर्मावरणासम्भवात्तथा चागमनं सर्वांशेनैव, न त्वन्यत्रापि केनाप्यंशेन हृदयं स्थापयित्वेतिभावः । एतासां निवर्तने यावत्स्वसामर्थ्यमुपयुज्यते तावत्पूर्णमत्र प्रकटीकृतवान्प्रभुरितिज्ञापनाय भगवानित्यादीनि प्रभुविशेषणानीति ज्ञेयम् । तेन स्वामिनीभावस्य महाबलवत्त्वं ध्वन्यते । तेन भक्तिमार्गोत्कर्ष एव सिध्यति । भावस्य भगवद्रूपत्वात्तदुत्कर्ष एवैवमपि पर्यवस्यतीति हृदयमाचार्याणाम् । नन्वत्र मोहने विशेष उक्तोन्यथा "मोहिता" इत्युक्तत्वेन पौनरुक्त्यं स्यात् । तथा च पूर्वस्मादाधिक्यस्य विशेषपदार्थत्वात्पूर्वस्य च भगवद्विषयकस्यैव तस्योक्तत्वात्तद्गत एव विशेषो वक्तुं युक्तो न तु गृहादिविषयकस्य पूर्वमसत्त्वादित्यरुच्या पक्षान्तरमाहुः अथवेति । स्थूणानिखननन्यायेनेतिभावः । न च भगवद्विषयकमोहाद्विशेषो वक्तुं शक्यः, असम्भवात्, तथा सति गच्छेयुश्चेत्याहुः अन्यथेति । ननु तच्छब्देन सर्वत्यागसर्वात्मभावाद्युक्तधर्मपरामर्शात्तस्य स्वत एव दृढत्वात्तथा सत्युभयविशेषणकथनप्रयोजनाभावाच नैतत्साधीय इति चेत् । सत्यम् । उक्तानुपपत्त्या प्रभुणा स्ववाक्यानां गमनार्थकत्वाबोधनाच्चाय एव पक्षे तात्पर्यमस्तीति यद्यपि ज्ञायते तथापि स्वरूपस्य रसरूपत्वेन भावात्मकत्व यदुच्यते तत्तु तद्विरोधिवचनाविर्भावेनानुपपन्नमितिशङ्कानिरासाय तदविरोध्यर्थकत्वमप्युच्यते वाक्यानां तात्पर्यविषयत्वेन । एतदेवाहुरतोर्थत इत्यादिना । यतः स्थितावेव भगवत्तात्पर्यमतो हेतोरापाततः प्रतीयमानार्थप्रत्यायनान्निवारयन्नपि फलतः स्थित्यर्थकानीत्यप्युच्यन्त इत्यर्थः ।

भगवद्वाक्यसंख्यातात्पर्यमाहुः दशविधानामिति । सगुणनिर्गुणभेदेन दशविधानां तथा, नत्वेतासामिति भावः । एतासां वस्तुतो निर्गुणत्वेपि लीलारूपत्वेन प्रसक्त्यभावेन तदभावोपि न वक्तुं शक्य इति तथा । तर्हि निषेधस्य कोपयोग. ।
१०-२६-१८.
क्षुब्धदध्नो नवनीतस्येव क्षोभकवाक्यैस्तथाभूताभ्यो हार्दप्रकटने प्रभुशुश्रूषार्तौ वाचनिकत्वा अपि प्रपत्ते सिद्धो लोके सर्वात्मभावमार्गप्राकट्ये चोत्कटभावोद्दीपने रसपोषादिषु चेति बुध्यस्व । एतासु नायिकाभेदेन भावभेदो बोधनीयः, ते च क्वचिदेकरूपा, क्वचित्कदाचिन्मिश्राः,

कश्चित्कदाचिदुत्तरेणोपमर्दिताः, केचित्कचिच्चिर स्थिराः, केचित्कश्चित्काले, केचिदाशु नाशिन इत्येवंरूपत्वं सत्वादिगुणेष्वस्तीति तद्दृष्टान्तेन बोधयितुं तादृशैः श्लोकैरेना निवार्यन्त इत्याशयेनाहुः तमो रज इत्यादि । तथा सत्युपचारेण भावा एव तमआदिशब्दैरुच्यन्ते । तथा च तेषां भेदा यत्रैतादृश्यस्ता निरूप्यन्त इति सम्बन्धः । वस्तुतस्तु लीलामध्यस्थाः सत्वादयः प्राकृतेभ्यस्तेभ्यो भिन्ना एतासु सन्ति । यतः प्रभुसंगमविलम्बहेतोर्लयं कर्तुं प्रिये स्वसंगविलम्बासहिष्णुत्वहेतुभूतभावमुत्पादयितुमेतस्यैव पालनेन स्थैर्यं कर्तुं च समर्थाः । अत एवादौ तम एवोक्तं, ततो रजस्तत सत्वम् । एतदेवाहुः स्वान्तेति । स्वस्य तमआदेरन्त फलं लयादि । उक्तरीत्यैतद्गुणानां तत्र पर्यवसानात्तथा निरूप्यन्त इत्यर्थः । प्रियं किमित्यत्र, अर्थादेतासामिति । स्वातिरिक्तस्य प्रश्नविषयीकरणादिति भावः । किञ्च । प्रियस्यानेकविधत्वे हि तेषां मध्ये किं करवाणीति प्रश्न संगच्छते । तेन तदनेकविधत्वं विवृण्वन्ति तत्प्रयोजनमित्यादिना । देशादिव्यवहितत्वमेवेशान् कामिते विशेषः । व इत्येकेनैव चारितार्थ्ये द्वितीयपदेऽपि तदुक्तेर्भिन्नविषयकत्व तस्यावगम्यत इत्याशयेन पक्षान्तरमाहुस्तत्रापीति । स्वामिनीष्वप्युक्तरूपसत्वादिभिस्तथात्वमस्तीत्येकैकविधाः प्रत्येकैकचरण[1] इत्यर्थः ।

१०-२६ २० भ्रातर इत्यत्र, अदृष्टेत्यादिना प्रासंगिकी लोकस्थित्या प्राप्तोर्थ उक्त ।

१० २६-२१. दृष्टं वनमित्यत्राप्युक्ता गुणा पूर्वोक्ता ज्ञेयाः । स्थितिपक्षे गृहे न गन्तव्यमिति यदुक्तं तत्र हेतुमाहुर्यदि गृहगमनेत्यादि । सर्वं त्यक्त्वा वन प्रविष्टस्य तदपेक्षायामेव प्रायश्चित्तं कृत्वा तत्र गमनं स्मृतिवचनेन बोध्यते यत इत्यर्थः । प्रकृते तदभावान्न गन्तव्यमेवेति भावः ।

१०-२६ २२. पतीन सतीरित्यत्र, द्वितीयाबहुवचनान्यथानुपपत्त्याहुः पतिविशेषणं चेति । तथा च तेषामुपहासवचनमिदं भवति । यतो लोकन्यस्यैतादृशीति तामुक्तवन्तः पूर्वजन्मनीत्यादिना । भवन्तश्चेति । जायमाना इत्यर्थः ।

१०-२६-२४ भर्तुरित्यत्र, स्त्रीणामिति बहुवचनेन भर्तुरित्येकवचनेन च सर्वासां य एको भर्ता तत्सेवाविधानाद् भगवत एव तथात्वाद् भजनमेव[2] विहितं क्रियत इत्याशयेन स्थितिपक्षार्थमाहुः स्वभावतो जीवानामित्यादिना । अत्र बन्धुप्रजाशब्दाभ्यां तत्सम्बीभावपरम्परे उच्येते ।

---

१ प्रत्येकैकचरण मू. पा । २. तथात्वात्तद्भजनमेव मू. पा. ।

**दुःशील** इत्यादिना क्रमेण यशऐश्वर्यवीर्यज्ञानवैराग्यश्रीविरुद्धा धर्मा उक्ता इत्या-
शयेनाहुः **षड्दोषः स इतीति** । स्थितिपक्षे स्वतोपि धर्मी दुष्ट इति पातक
१०-२६-२५ सम्बन्धोक्त्या ज्ञाप्यते । कदाचित्त्याज्यत्वेन नित्यमभजनीय इत्यपि तथा ।

**अस्वर्ग्य**मित्यत्र, उपपतिसम्बन्धे दोषोक्त्या प्रभोश्च सहजपतित्वेन स्पष्ट स्थितिपक्ष ।
१०-२६ २६ कुलसम्बन्धाभिमानवतीनामुक्त्या तत्र[1] तदभावादपि तथा ।

**प्रेष्ठं प्रियेतरमिवे**त्यत्र, शानजर्थानुपपत्त्या पक्षान्तरमाहुः **अथवा तस्यामि**त्यादि ।
भाषणेनैव सर्वतिरोधानमुक्तमिति पुनरपि तथैव चेद् भाषण स्यान्न स्यादेव
१० २६ ३० विशेषाभावादतः पूर्वविलक्षणमेतद्वाच्यम् । ततो[2] जीवनमुक्तिसामर्थ्यं चात्र जातम्,
अन्यथैतन्न स्यादिति वैलक्षण्यमेव निरूपितं **तस्यामप्यवस्थाया**मित्यादिना । अत एव **प्रतिभाषण**मुक्तं मूले । औदासीन्यपूर्वकपूर्वभाषणविरोधिसहासभाषणाभिप्रायेण । **तदर्थ-विनिवर्तिते**त्यत्र, **यदि त्यक्तोऽपी**ति । भगवदर्थं सर्वत्यागो भगवतोक्त, पूर्वं त्यक्तार्थो परिग्रहोपि, यतः शुकादयोपि तथा चरन्ति, अधुना गृहपरिग्रहं वदति, एवं सति भगवदुक्तमिति गृहं चेद् ग्राह्यं, तदा तदविशेषात्सर्वत्यागपूर्वकं भगवानेव कुतो न ग्राह्यः, गृहस्यैव ग्रहणे विनिगमकाभावादित्यर्थः ।

**देवो यथे**त्यत्र, **अनङ्गीकार** इति । अन्यत्र रागोत्पत्त्या विवाहिते रागाभाव
उचित इत्यर्थः । यद्वा । द्वितीयस्यानङ्गीकार उचितः, न तु भर्तुरभजनमित्यर्थः ।
१०-२६ ३१. अनेन दृष्टान्तेन स्वस्य सर्वत्यागपूर्वकं भगवद्भजनेप्युपपत्तिरुक्तेति
ज्ञापनायैवमुक्तमाचार्यैः । अन्यथा मूले प्रभुकर्तृकभजने दृष्टान्तोक्त्या विरोध स्यादिति ज्ञेयम् । **स्वात्मयये**ति आविष्कृतमिति भावार्थरूपतान्तम् । तथा च सुषुप्तिमपेक्ष्य तत्साक्षिरूपस्य भगवतः[3] सम्पत्तिर्ब्रह्मसम्पत्तिर्मोक्ष इति यावत् । तद्दानार्थं वा भगवत स्वाविष्करणमित्यर्थ । केचित्तु स्वयंप्रकाशब्रह्मस्वरूपज्ञानातिरिक्तज्ञानाभावकथनम्, श्रुतौ तु तयोरन्यतरापेक्षम्, तत्र विनिगमकमाहाविष्कृतं हीति । हि यस्माद्धेतोस्तत्तत्प्रकरण एव तदुक्तमित्यर्थ इति वदन्ति । एवमपि सति ब्रह्मस्वरूपाविर्भावस्यैवोक्तज्ञानाभावे निमित्तत्वान्न पूर्वस्माद्विशेष । प्रथमवचनश्रवणानन्तर चित्तवैयग्र्यमभूदित्यग्रिमवाक्यानां व्युत्क्रमेणोत्तरदानमिति ज्ञेयम् ।

**अस्त्वेवमेत**दित्यत्र, एवमित्यस्य विवृतिः **सर्वरूपे**ति । पत्यादिसर्वसेवारूपेत्यर्थः ।
एवमुक्तौ हेतुमाहुः **अन्यत्रे**त्यादिना । पत्यादिसेवाविधेर्भगवत्सेवाविधायकत्वोक्त्या
१०-२६-३२. त्वमेव सेव्य इति पक्षेप्युपपत्तिरुक्तेति ज्ञेयम् ।

---

१ —मुक्त्यात्र मू पा । २. यतो मू पा । ३ भगवत. । मू पा. ।

**कुर्वन्ति हीत्यत्र, स्नेहेन हीत्यादि** । प्रियायाः स्नेहसमानविषयत्वस्यो स-
र्गिकत्वादात्मन एव निरुपधिस्नेहविषयत्वाद् भगवति प्रत्यग्रैव च तद्गामित्वात्
१० २६ ३३ त्वय्येव रतिं कुर्वन्तीत्यर्थः । अत्रौपाधिकस्नेहकथनस्यायं हेतुः । भगवता हि स्वातिरिक्ते सर्वामौपाधिकी प्रीतिर्नास्त्येति पक्षमाश्रित्योक्तम् । स्वामि यस्तु त्वादिरीत्या प्रतिवादिमतमङ्गीकृत्य[1] प्रौढ्या तत्पक्षं निराकुर्वन्तीति न कश्चिद्दोषः । **नित्यप्रिय** इत्यत्र, **अन्यथा जारसेवापी**त्यादि । ननु धर्मत्वे विहितत्वस्य प्रयोजकत्वादत्र तदभावात् तथेति चेत् । उच्यते । प्रागज मनि विवाहिते पुंसि जीवति पुरुषान्तरेण विवाहे दोषाकथनात्तत्र जन्मावच्छेदकमिति वाच्यम् । एवं सत्येतत्समानयोगक्षेमत्वादितरस्यापि तथात्व सुवचम् । न च तत्र पतित्वाभावान्न तथेति वाच्यम् । 'स वै पतिः स्यादकुतोभयः स्वयं' 'जीवच्छवं भजति कान्तमतिर्विमूढा । या ते पदाब्जमकरन्दमजिघ्रती स्त्री'त्यादिवाक्यैः तत्त्वभयवति पतित्वाभावेनोभयोस्तुल्यत्वात् । एवं सति पतिभजनं विदधच्छास्त्रं हरिसेवामेव विधत्ते । प्रभोर्दुरापत्वेन व्यवहारनियमार्थं परं तथा स्मृत्यादिषु कथनमिति भावः । अत एव वाग्दत्तापि कन्या ततः श्रोत्रियः उपागते तस्मै दीयते न पूर्वस्मै । **वरदेश्वरे**ति सम्बोधनेन व्यञ्जितमर्थमाहुरतो **वय क्लिष्टा** इत्यादिना ।

**सिञ्चाङ्गे**त्यत्र । अत्र सिञ्चनस्यावश्यकत्वे हेतुरुत्तरार्धेनोच्यते । तत्रापि याम इति
वर्तमानप्रयोगेण स्वजीवनस्य क्षणमात्रमपि तद्विलम्बासहिष्णुत्वं ज्ञाप्यते ।
१० २६ ३५ एवं सत्येतत्कालीन जीवनमुक्तिश्च प्रियकृतस्वसम्भाषणजनितमेवेत्यन्यथा
नुपपत्त्या कल्प्यते । यद्यप्युत्तरदानसमये न तदस्ति, तथापि, पूर्ववचनानामुत्तरदानार्थमेव हृदि स्थापितत्वात्तदनन्तरं तदभावे सति चेन्माऽस्त्वमुधादानम् ततो भाषणमपि वा न भवेत्तदोक्तैव रीतिर्भवित्रीति हृदि कृत्वा **पितृचरणै**रुक्तं **वयमि**त्यारभ्य **वक्तव्य**मित्यन्तम् । **नो चेद्वयमि**त्यत्र, **हरेणैव दग्ध** इत्यादि । विरागादिपदमनुकृत्य विरहपदं यदुक्तत्वस्य तज्ज्ञापितं भावविशेषमाहुः **स विपरीत** इत्यादि । अयमर्थोऽत्र पूर्वोक्तः । तथा सति पुनरुक्तिर्न स्यात् । तथा च पूर्वस्मादस्य कठिनत्वं वाच्यम् । तदाहुर्नमित्युपपत्त्या । हरदग्धः कामोऽन्यत्रस्थोऽप्यग्निः । उत्तापूतन जीवेदपि । अनेन तु दग्धः क्षणेनैव भस्मसाद् भवति पदार्थे, पुनर्जीवनाशारहितश्च । उक्तरूपदाहकर्तृवाचकपदस्थवर्णवैपरीत्येनैतद्वाचकपदस्थवर्णयोस्तद्वाच्ये तद्विपरीतधर्मवत्त्वं लभ्यते । सोऽस्माभिरुक्तोऽनने त्यादिना । एवकारोऽप्यर्थे । तथा चोक्तरूपदाहकर्त्रा हरेणापि दग्धो यत्र कामोऽधुनापि न जीवति, तत्रोक्तरूपेण दग्धाः कथं पुनर्जीवेयुरिति भावः । पूर्वं सिञ्चनस्य[2] जीवनकर्तृत्वलक्षणोऽपि तद्विपरीतो धर्म उक्त इति

---

१—मङ्गीकृत्य मू पा । २ सेचनस्य मू पा ।

प्रभुत्वरूपमेवात्र रहःपदेनोच्यते । तस्यत एव समर्थं, तत्रापि कोटिकन्दर्पाधिकलावण्येन विभावानुभावादिसामग्र्या च विशिष्टं किं किं न कुर्यात् । एतदेवोक्तं **तत्रापि विशिष्टो विरह** इत्यनेन । लोकप्रसिद्धमर्थमाहु**रेकान्ताभावे**ति । ननूक्तरूपत्वे कदाचिदपि सुखदत्व न स्यादित्याशंक्य श्लिष्टार्थकोयं प्रयोग इत्याशयेनाहु**रनेन त्वये**त्यादिना । स्वरूपस्यैव विरहत्वमित्यर्थः । [illegible] भाव । ततः काष्ठात् । [illegible] ते । तेन सोपधिस्नेहे स्वनैवभाव इति भावः सूच्यते ।

**यर्ह्यम्बुजाक्षे**त्यत्र, तत्तद्विशेषणोक्तितात्पर्यमाहु**रस्माभिर्विचारित**मित्यादि । 'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत् कूटस्थो रतिरा मन् यतो

१०-२६-३६. भवे'दितिवद्भ्रमानेदार्थं विचार्य निर्दोषपूर्णगुण एव सेव्यः । स च भगवानेव । स च निर्दोषेणैव सेवितुं शक्य इति निश्चित्याधिदैविकाध्यात्मिकदोषानप्यपहाय त यत्र इति तथा । **अरण्यजने**त्यत्र । ननु नाद्यन्यत्यागोत्यैवान्यसंगत्यागोप्युक्त एवेति **तेनापी**ति ग्रन्थो न युक्त इत्यत आहुः **संगाभाव** एवेति । पूर्वं दोषाभाव उक्तोऽधुना प्रीतिहेतुर्गुण उच्यते इति न तथेति भावः । अत एव मूले **प्रीति**रुक्ता । अन्यपदार्थमाहुः **सर्वथे**ति । **तद्धर्मे**ति । भगवद्भावप्राकट्यादित्यर्थ । **सर्वदैव स्वप्न** इति । पूर्वमपि रमणपक्षे तस्य गोप्यत्वादेवमुक्तमिति ज्ञेयम् ।

**वीक्ष्यालके**त्यत्र, **चतुर्विधो मोक्ष** इत्यादिना पुरुषार्थत्रयनिराकरणम् । अत्रालका-वृताद्दिपदैर्मोक्षादिनिराकरणोक्तेरयमाशय । मूले हि प्रभोरङ्गान्येवोक्तानि

१०-२६ ३२. दासीभवनहेतुभूतेक्षणविषयत्वेन । तथा च त्वा वीक्ष्येत्येतावतैव चारितार्थ्येपि यत्प्रत्यङ्गनिरूपणं, तत्रापि भूषणाना, त साभिप्रायमिति स निरूप्यन इति । **सारूप्यमिवे**ति । सारूप्यमुक्तिमिवेत्यर्थः । अत्रालिनासारूप्यवदलकै सारूप्यमुक्तिमन्ता भक्ता लक्ष्यन्ते । केशा बद्धा अपि भवन्ति, न त्वलकाः । इतोपि तथा । 'मत्सेवया प्रतीत च' 'सालोक्यसार्ष्टि-सामीप्ये'त्यादिवाक्यैश्च तासां चतुर्विधानामपि दास्यन्यूनत्वं सिद्धम् । तत्रैनदसप्राप्त्यभावा-देतस्य च ततोधिकत्वादि तदवरणम् । अत एवावरणाचरणरूपत्वमेवोक्तम् । नह्यन्त स्थितिं विना परितः स्थितिमात्रेण रसपानमलीनां सम्भवति । मुखस्याम्बुजत्वमप्येतेषां रसपानाभावज्ञापनायैव नोक्तम् । किञ्च, कमलं हि न पेयमपि तु तत्स्थो रसस्तथा न तदास्य[1] किन्तु स्वयमेव रसात्मकमित्यपि ज्ञापयितुं तत्त्वं नोक्तमिति ज्ञेयम् । बहु-भिरावरणान्महारसत्वं न्यूच्यते । किञ्च । लीलाया नादस्य वा श्रवणेन पूर्वं जनितो यो

---

१. दास्यं मू पा ।

भावः स एतद्दर्शनेन पुष्टः क्रियते । प्रचुरतर्लयो विविधरसभावोपपत्तिश्चेति स्थितिन्यो-त्पत्तिकर्तृवाचकस्वर्गात्मकनाम्ना सूच्यते । अतो युक्तं दासीभवनमिति भावः । स्वसुन्द रस्मित यादिनोक्ताधिकारवतीनां दये दास्ये सुख स्वाधीनं भवतीति तच्छेषभूतानामनङ्गीकारः सर्वत्र । गण्डस्थलेत्यत्र, स्थले हीति । एतज्ज्ञापनायैव स्थलपदम्, अन्यथा नोक्तं स्यादिति भावः । भुजदण्डयुगमित्यत्र, उभयत्रेति । इन्द्रादीनां भयदैरपि दैत्यै-र्भगवच्छासनमनुल्लङ्घ्यमिति यैर्हिकानिष्टनिवर्तकः । देवानामपि तत्तथा । यज्ञाकरणे द्विजा-न्दण्डयत्येवे यनुल्लङ्घ्यत्वाज्ञत्वेन मुक्तिहेतुभूतशुद्धिजनकहविर्दानेन पारलौकिकसुखप्रद इत्यर्थः । हविर्दानेन परलोकसाधने विशेषमाहुः तत इति । भगवत्क्रियाशक्तिरूपवैदिकक्रिया-सम्बन्धिहविर्भोगादित्यर्थः । सर्वथा अन्तःकरणस्थानामपीत्यर्थः । ( भुजदण्डावित्यनुक्त्वा द्वित्वसंख्यावाचिपदमेकवचनान्तं यदुक्तं तत्रायं भावः । द्वयोः पृथक् प्रतीतौ ह्यपेक्षाबुद्धिः । तया च द्वित्वम् । प्रकृते चाश्लेषदशायामुभयोर्भुजयोरेकवत् प्रतीतिः । सा च न स्वाश्लेष-समये सम्भवति, किन्तु यस्याः । तथा च तादृग्दर्शनं भावोद्बोधकं भवत्येवेति । तथापि द्वयपदमनुक्त्वा युगपदं यदुक्तं तेन युगस्वभावो यथा न निवर्तयितुं शक्यः केनापि, तथा भुजदण्डयोरप्येकवचनसूचितार्थलक्षणः स्वभावो न मर्यादाशास्त्रादिभिर्निवर्तयितुं शक्यो भवति च । तथैवेति ज्ञाप्यते । तेनास्माकं दासीभवनमावश्यकमिति । )

का स्त्र्यङ्ग ते इत्यत्र, भगवत्साक्षात्कारे सति मोहासम्भवमाशङ्क्याहुः तेषां बलमिति । मर्यादामार्गीयभगवद्धर्मेभ्योऽपि पुष्टिमार्गीयास्ते बलिष्ठा इति भावः ।

१० २६ ४० आर्यचरितादित्यत्र । नन्वार्या हि श्रेष्ठाः, ते च भक्ता एवेति तच्चरितमेव सर्वत्यागपूर्वकं भगवद्भजनमिति कथमेवं कथनं युज्यत इत्याशङ्कानिरासायार्यपदार्थमाहुः प्रमाणपन्थविवेकिन इति । ननु विवाहितभजनं हि प्रमाणमार्गः, भगवान् सर्वात्मक इति 'गोपीनां तत्पतीनां चे'त्यग्रे वक्ष्यमाणत्वाच्च तत्र हीयते, अधिकं परं सम्पद्यत इति नैवापपत्तिरित्यत आहुः प्रमाणे हीत्यादि । तन्मार्गे हि पतित्वादयो धर्मा देहनिष्ठा एव । अतस्तद्भिन्नत्वेनोपस्थितस्तद्भजनविषयो न भवति । 'यावद्वचनं हि वाचनिक'मिति न्यायात् । एवं स यय मार्गो वस्तुविचारं न सहते । न च विहितत्वेनैवोत्तमता, निषिद्धत्वेनैवाधमतेति वाच्यम् । 'शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु'इति भगवद्वाक्यविरोधात् । न चैतद्विरोधपरिहारस्तत्र कर्तव्यमिति वाच्यम्, प्रमेयमार्गस्य स्वतन्त्रत्वेनैतस्माद् बलिष्ठत्वेन चैतद्विरोधस्याप्रयोजकत्वात् । अन्यथा प्रेममार्गोच्छेदापत्तिः । एतदेवोक्तं प्रमाणे हीत्यारभ्य न दूषणमित्यन्तेन ग्रन्थेन । ननु प्रमाणमार्गीयाणां प्रमेयमार्गीयाणां च मिथो भेदात् प्र-माणवाक्यं न प्रमेयमार्गीयं विषयीकरोति, यागविधिर्यतिमिव, अतो न विरोध इति चेन् ।

स्यादेवं यदि प्रमेयमार्गेऽपि विधिः स्यात्, सत्याश्रम इव। तथा सत्यधिकारिविशेषणमहिम्नैवान्यस्याप्राप्तेरविरोधः स्यात्। प्रकृते च प्रश्नानुपद्देहेतुत्वेन विध्यभावाद्वर्णाश्रमविशेषाधिकारेण प्रवृत्तं वाक्यं न संकुचितुमर्हति। बाधकाभावात्। अतस्ततोऽन्यथाकरणे विरोधो दुर्निवारः। प्रमेयमार्गप्रामाण्यं तु 'धर्मव्यतिक्रमो दृष्ट' इत्यादिना 'या श्रुत्वा तत्परो भवे'दित्यन्तेन शुकवाक्येनैव वक्ष्यत इति सर्वमनवद्यम्।

**व्यक्तं भवा**नित्यत्र, ननु यथार्तौ सत्यामपीयदवधि तत्र स्थितम्, तथाधुनापि स्थेयमित्याशङ्कानिरासायाधुनार्तिहरत्वोक्तितात्पर्यमाहुः **इदानीं**
१०-२९-४१. **यथार्तिरि**ति।

इति **विक्लवित**मित्यत्र। अत्र षड्भिः श्लोकैः रमणं स्वकार्यसहितं निरूप्यते। तत्र संख्यातात्पर्यमाहुः **षड्गुणैश्वर्ये**ति। अत्रायं भावः। भागवते हि
१०-२९-४२. परमकाष्ठापन्नं वस्तु भगवच्छब्देनोच्यते। तस्य च षड्गुणवत्त्वमर्थः। प्रकृते च रमणमुच्यते। तच्च विविधभावसाध्यम्। ते च निर्विकारे ब्रह्मणि न सम्भवन्तीति मायया प्राकृतगुणसम्बन्धाद्वैतत्कृतमिति कश्चिद् बहिर्मुखः शङ्केत, तन्निरासो रमणनिरूपकश्लोकसंख्ययैव रमणस्वरूपनिरूपणेन क्रियत इति। एतदेवाहुः **षड्गुणैश्वर्ये**त्यादिना। षड्गुणे यो भगवत ऐश्वर्यभावः स्वामिभावः। रमणे यदा यस्य गुणस्योपयोगस्तदा तत्प्राकट्यकरणेन रेम इत्यर्थः। न तु मायाद्यधीनत्वेनेति भावः। अत एव **स्वय** पदम्। अन्त्येन श्लोकेन तिरोधानोक्त्या विप्रलम्भोऽपि निरूपितो भवतीति पूर्णो रसोऽत्र निरूपितो भवतीत्याहुः **स्वरूपेणापी**ति। विशेषतो लक्षणानि त्वग्रे वाच्यानीति भावः। वाक्यार्थमाहुः **सामान्ये**त्यादि। विशेषरमणं बाह्याभ्यन्तरभेदेन द्विविधमिति। द्वितीयेन बाह्यं तदुक्तमित्याहुः **विशेष** इति। तृतीयेनान्तरम्। अजातस्मरकेलिजातस्मरकेलिभेदेन द्विविधा विलासा इति द्वाभ्यां तदुक्तिः। ननु नायिकामानापनोदनं चाटुकारैरकृत्वैवं कथं कृतवानित्यत आहुस्तात्पर्यं **नायं लौकिके**ति। एतच्च श्लोकविवृतौ स्फुटीभविष्यतीति तथा।[1] **तदैव स्वरूपमेवे**त्यारभ्य **वचः स्फुट**मित्यन्तग्रन्थस्यायं भावः। प्राकृतपुरुषस्येव स्त्रीप्रेक्षणादिभिस्तदा सञ्जातः कामश्चेत्स्यात्, तज्जनितश्चाङ्गादिविकारः स्यात्, तदा प्राकृतस्येव तन्नाशोऽपि स्यात्। न चैवम्, किन्तु 'रसो वै स' इत्यादिश्रुतिभिः स्वरूपमेव रसात्मकमिति रसशास्त्रसिद्धा यावन्तो भेदास्तत्सर्वरूपं स्वरूपमेवेति तादृशमेव पुरुषोत्तमस्वरूपमिति नानुपपत्तिः काचिदिति। यथा दैत्यान्प्रति वीररूपेणैवाविर्भावः, तेषां तथैवाधिकारात्, तथात्रैवमाविर्भाव इति हृदयम्। हास्यस्य मोहकत्वेनाधुना तत्प्रयोजनाभावमाशङ्क्य

१. स्फुटीभविष्यति। तथा तदैव मू. पा.।

तदाहु तासां यथेत्यादि । हासे प्रकटीयनैव । सत्याङ्गीकार एव हास्यसम्भव इति तथा । अन्यथाक्तरूपेण सम साम्याभावाद्रसो न स्यात् । साम्यस्वभावादेव न स्वस्माद्भिन्नतया गणना । सा तु मर्यादायामङ्गीकारे भवति । तथा सत्येवभूतानामपि मर्यादाया पातने भक्तिमार्गमर्यादानाशः स्यात । तदेतदुक्त नाशनार्थमयन्तेन । उद्धारात्रैनदुक्तनापात् । उत्कटतापदर्शनेनैव तदुद्धरणार्थं दया । तथा च हासनैव तापनाश सूचितो भवति । अन्यथा रसाभासहेतुत्वेन ता न वदेत् । अथवा । मूल सदय रेम इति सम्बन्ध । इदं हि रमणममृतरूपमादावुक्त सामान्यरूप च । अतोत्र न पूर्णरसदान, किन्त्वल्पे । तेन न भगवत्समान सामर्थ्यमधुनास्ती यधिकक्रियाशक्त्याविर्भावेन नायिकानामुपमर्देन रसनाशः स्यादिति, तदभावाय दयोक्ता । यद्यप्येन रस पुष्टो न भवति, तथापि रसाभासभावाभासैर्मुग्धो रस. पोष्यत इति रमणमभिमरमपोषायोपयुक्त । अत एवाभासे तापापनोदनार्थं सामान्यमीत्याह युगमाचार्य ।

( [1]प्रिया सर्वापि सेवेत्यत्र, भगवतो भक्ता चालौकिक व लौकिककामाभाव चाहुः प्रिया सर्वापीति । अयमर्थः । लोके रससम्बन्धिनी क्रिया लौकिककामविषयिण्येव प्रसिद्धेति भगवच्चेष्टायाश्च तत्सजातीयत्वात्कामापि लौकिक एव भविष्यतीति कस्य चित्ता तस्याशङ्का वारयितुमाहु पर काम इति । लौकिक कामो न विद्यत इत्यर्थः । ननु भगवान् पुरुषोत्तम इत्यस्तु नाम लौकिककामाभाव, एतासां लौकिकत्वदुष्टत्वमस्त्विति चेत्त आहुः तासां कामस्येति । अयमर्थ । यदि भक्ताना लौकिक कामः स्यात्तर्ह्यलौकिकेन भगवत्कामेन पूर्णो न स्यात् तयो परस्परमेकजातीयत्वाभावात्, विजातीयेन विजातीयस्य पूरणासम्भवात् । अतो भगवत्कामेनैव तासां कामस्य पूर्तेर्भगवत्तुल्यत्व तासामपीति ज्ञापनायोक्त तादृग्येनेति । यथा भगवानप्राकृता लौकिककामरहितस्तथैता अपीत्यर्थः । अन्यथा भगवन् पूर्णत्वमाद्यथा न स्यात, पूर्णाधिकत्वेन भाववैजात्यात् । ननु कामो न विद्यत इति कथनाद्भगवति तदभ्युपगमाद् भक्तेषु लोभयविधकामाभाव एवास्त्विति चेत् । न । पञ्चमाध्यायोक्तकारिकाविरोधात् । तत्र लौकिकविषयकत्वेनालौकिकस्य भगवति निरूपितत्वात् । तथा हि । 'अत्रैव लोके प्रकटमाधिदैविकमुत्तमम् । कामाख्य मुख्यमुद्दिष्टं यो भुङ्क्ते न च पापभाक्' इति । अत्र कामस्यास्य आधिदैविकत्वात्तम वदिशिष्टस्य प्रकाशोक्तेरन्यथालौकिकस्यैव तस्य निषेधः, न त्वलौकिकस्यापि, अतो भगवद्भावत्वादपि तथैव, अन्यथा भगवतो भोक्तृत्वमत्र न स्यात् । तस्मात् सम्यगुक्तं तादृग्येनेति । विपक्षे बाधकमाहुः

[1] 'अत्र सर्वेषां स्वत कटिपरीपुस्तकेषु दृश्यते तद् पाठ्यं स्वत नास्तीति श्रीगोकुलनाथानां तद् प्रतिभाति, टेका विना प्रयोग चापि प्रपुष्टव्या ।

**कामेनेति** । प्राकृतेनेति शेषः । तादृशस्य संसारजननावश्यकत्वात्, प्राकृतेषु सर्वत्रैव तथा दर्शनात् । अत्रत्यभक्तेषु संसाराभावात्प्राकृततदभावो निःसन्दिग्ध इति ज्ञापनायोक्तं **न संशय** इति । प्राकृतत्वाभावे हेत्वन्तरमाहुः **अतो न कापीति** । यतोस्य भावस्यालौकिकत्वम्, अत एव मर्यादामार्गीयमोक्षेच्छूनामपि प्रवृत्तिर्न बाधितेत्यर्थः । मोक्षमार्गे कामाभाववतामेवाधिकारात् । तथा च श्रुतिः 'श्रोत्रियस्य चाकामहतस्ये'ति । तस्मादस्य भावस्य प्राकृतत्वं स्यात्, तदा तत्कृतलीलाया अपि तथात्वात्तच्छ्रवणे लौकिककाव्यादिवत् कामोद्बोधात्तेषामेतल्लीलाश्रवणस्य विपरीतफलकत्वात् प्रवृत्तिर्न स्यादित्यर्थः । चकाराद् भक्तिमार्गीयापि मर्यादा न भग्नेत्यर्थः । तस्मादस्य भावस्यालौकिकत्वात्तेषामेतल्लीलाश्रवणे फलमुखां प्रवृत्तिमाहुः **अत एतच्छृण्वाविति** । एतल्लीलाश्रवणेन लोकः सर्वोपि साधारणोपि लौकिककामरहितो भवेत् । नन्वेतादृक्श्रवणमात्रेण कथं लौकिकतदभाव इति चेत्तत्राहुः **भगवच्चरितं सर्वमिति** । वस्तुस्वभावादेवेत्यर्थः । यद्वस्तु यादृशं भवति तत्स्वनिष्ठमपि तादृशं करोति । एतल्लीलाया लौकिककामराहित्यादलौकिकत्वप्रतिपादकत्वादेतत्परोपि लौकिकतद्रहितः सन्नलौकिकनिर्हेतुकभगवद्भावयुक्तो भवतीत्यर्थः । श्रवणं तु लीलातात्पर्यावधारणपूर्वकं, न तु यथाकथञ्चित् । **अतः कामस्येति** । यत इयं लीला लौकिककामरहिता, अत एतच्छ्रवणेन लौकिककाव्यश्रवणवन्न लौकिकतदुद्बोधः । ततः कारणात् 'कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीर' इति शुकवचनं स्फुटं स्फुटार्थमित्यर्थः । ) **अतो न कापीति** । मोक्षफला मर्यादा, कामे सति न मोक्षः, तदभाव एव सः इति लक्षणापि न भग्नेति सम्बन्धः । [1]तथा च श्रुतिः मोक्षरूपब्रह्मानन्दप्राप्तौ 'श्रोत्रियस्य चाकामहतस्ये'ति[1] । तत्रोपपत्तिमाहुः **अत एतच्छृण्वाविति** । ननु कामलीलाश्रवणेन लौकिकभावोत्पत्तिर्लौकिकस्यावश्यं भवतीति विपरीतं प्रयोजनं स्यादित्यत आहुः **भगवच्चरितमित्येकं** श्लोकम् । वस्तुस्वभावादेवाद्भुतकर्मत्वाच्च प्रभोरेतच्छ्रवणे तदुद्बोधो नेत्यर्थः । यतो न भवत्यत एव शुक एतल्लीलाश्रवणादिफलं कामाभावमेव 'काममपहिनोती'ति प्रकटमेवाह । यद्यपि हृद्रोगमपहिनोतीत्येवमेव वाच्यम्, तावतैव चारितार्थ्यात्, तथाप्युक्तलीलास्वरूपं ज्ञापयितुं स्फुटमाहेत्यर्थः ।

**उदारहासद्विजकुन्देत्यत्र, कुन्दत्वं स्नेहस्येति** । काममात्रपर्यवसायी स्नेह इति ज्ञापनार्थमित्यर्थः । कुन्दानां रसमात्रोपयोगित्वादिति भावः । अत्रायं
१०-२६-४२. भावः । स्वामिनीनां सदा निरुपधिस्नेह एव चेत्स्यात्तदा खण्डितादिभावासम्भवेन पूर्णरसभोग उभयत्रापि न सम्भवतीति निरुपधि वांशमाच्छाद्य कामोपाधिकत्वं सम्पादितवान्, नैतावता भक्तिमार्गे हीनता । आद्यप्रवृत्तेर्निरुपाधिकत्वाद् भगवता स्वानन्ददा-

१...१ इदं मूले नास्ति ।

नार्थे स्वयमेतद्भावजननादिति । तर्हि कामनिवृत्तौ तन्निवृत्त्यापत्तिरित्याशङ्कानिरासो दीधितिनिरूपणेन कृतः । स्नेहरूपदन्तेषु दीप्तिरुत्तरोत्तरमेकरूपेण प्रकाशमानत्वमेव । एतमेवार्थं परोक्षेणाहुः तथा सतीत्यादिना । ननु भगवानेतत्प्रार्थनया रमते, न तु स्वयं विनैव प्रार्थनाम् । तथा सति स्वामिनोऽपि यदवधि यावान्भावः सम्पादितोऽस्ति तत्पूरण-मेवोचितम्, न [1]त्वधिक(संपादन)म,[1] प्रयोजनाभावात्, तावतैव श्रोतॄणां कामदोषनिवृत्ति-संभवादुदारहासादिकरणं कुत इत्याशयेन यद्यपीत्यादिनाशङ्क्यात्र भगवदिरसाया एवो-पक्रान्तत्वात्तत्रानुरूपसर्वसामग्रीसम्पादनमावश्यकम् । अत एव न पूर्णमनोरथ इवौदासीन्येने-तत्सन्तोषार्थमेव रमते । तथा सति रमणस्वरूपाभावेनैतत्सन्तोषासम्भवप्रसंगः, किन्तु लौकि-कनायकवद्विकारयुक्त । एतज्ज्ञापनायैव मूले दृष्टान्तोयमुक्त इति तत्समाधानमाहुस्तथा पीत्यादिना । कलङ्कवत्त्वोक्त्या प्रकृते विकारभाववत्त्व सूच्यते । स यथा पूर्णोऽप्यपूर्णो भवति, पुनः क्रमेण पूर्णोऽपि, न तु सदा पूर्ण एव, तथात्रापीति ज्ञाप्यत इति भावः । यन्धातिरिक्ताः सर्वा इति । स्वामिनीनामुडुस्थानीयत्वात्तेषामेवान्तरत्वोक्त्यावरणस्य[2] च बहिः परित स्थितिनियमेनात्रापि बाह्या एव लीला उक्ता भवन्तीत्यर्थः ।

मालामित्यत्र । प्रकरणाद्रसपोषार्थमापर्वस्य चरणमपि तदर्थमेवेत्याशयेनाहु

१०-२६ ४५ एषा हि गतिरिति ॥ इति षड्विंशोध्यायः ॥

सप्तविंशाध्यायार्थनिरूपणाय पूर्वाध्यायोक्तानर्थानतात्पर्यं वर्णने, पुष्टो यथा-न्तरित्यादि । अत्रायं भावः । संगमे ह्यग्रिमाग्रिमरसार्थं नवो नवः प्रयत्नो

१० २७-०. भाव्यते, न तु पूर्वानुभूतो रस पोष्यते । सर्वेषां तेषां स्वतन्त्रत्वात् । संयोगे यथा यथा रसानुभवाधिक्यं, तथा तथा विप्रयोगे दुःखाधिक्यमित्यनुभवसिद्धम् । एवं भावे संस्कारमात्रशेषस्य पूर्वरसस्योपमर्दकाग्रिमसंगमरसाभावेनान्तरेणातिपुष्टो भवति तथा, यथा पूर्वानुभूतलीलास्वरूपा भक्ता देहेन्द्रियप्राणान्तःकरणात्मानो भवन्ति । किमुत । अत एवामावहमित्यादिरूपं ज्ञानं तथैव क्रिया च भवतः । एतदनन्तरं जाते संगमे पूर्व-संगमादधिकरसवत्स्फूर्तिर्भवत्येव । अन्यथा संगमत्वाविशेषेण तदनुपपत्तेरिति दिक् । यद्यपि संगमोत्तरकालीनविप्रयोगमात्र एवैतादृशत्वं सम्भवतीति नान्तःप्रवेशापेक्षा तथाप्ये-तद्विप्रयोगस्यातिविषमत्वेन क्षणमात्रेणान्यथाकरण एतद्रसदानं नोपपद्यत इति रसात्म-कत्वात्स्वरूपस्य स्वयमेव प्रविष्ट इत्याहुस्तदर्थं भगवानिति । चत्वारोऽत्रेति प्रियप्रा-प्तिसाधनानुष्ठानरूपं तद्रसस्वभावप्राप्त गुणगानं चतुर्थाभिः । रसासक्तिरिति । रसास-क्त्यादित्रयमस्मिन्नध्याय उच्यते । एता हि रसासक्त्यैतान्वेषणपराः, अन्यथा गृहानेव

१. त्वधिक सम्पादनम् मू पा. । २ —तेषाम बरत्वे प्यावरणस्य मू पा. ।

गच्छेयुः । एवं सति यदैव बहिः संवेदनं तदैवान्वेषणमिति तदुक्त्या रसासक्तिरेवोक्ता भवतीति तथा । अग्रे स्पष्टम् । उक्तार्थत्रयनिरूपणे प्रकारविशेषमाहुः **उद्देशत** इत्यादि । आद्यैस्त्रिभिस्त्रयाणामुद्देशः कृतः । अन्वेषणं रसासक्तेर्लक्षणमसाधारणो धर्मोनुमापक इति यावत् । लीलाया एतदन्तःस्थित्यनुमापक एतासु तदाविर्भावः । गर्वाभावज्ञापकं सपत्नीभाग्याभिनन्दनादिकम् । अन्वेषणफलं च पददर्शनम् । लीलावेशफलं प्रियाधीनत्वस्वानधीनत्वदर्शनेपि प्रिये दोषारोपाभावपूर्वको 'रेमे तया चे'त्यादिनोक्तो भावः । गर्वाभावफलमितरविस्मृतिपूर्वकं तत्प्राप्त्यर्थकः प्रयत्नः[1] ।

१०-२७-१. **कस्यिष्य इवेत्यत्र, तथात्र काल** इति । अवतारसम्पूर्तिकाल इत्यर्थः ।

**गत्यानुरागेत्यत्र, अतःस्मितेन मन्दहासेनेति** । अन्यथा प्रकृष्टोदारहासस्यैव

१०-२७-२. पूर्वमुक्तत्वादधुना स्मितं न वदेदिति भावः ।

**गतिस्मितेत्यत्र, भगवति स्वधर्मानिति** । स्वगतौ प्रियगतिभावना जातेति

१०-२७-३. तथा । **भगवद्धर्मैरिति** । भगवत एतासां च मिथो वैलक्षण्यं गत्यादिषु सहजम् । अधुना तु भगवद्गत्यादिवदेव गत्यादि, संस्थानविशेषोपि तथा, न तु प्राग्वत् । तथा च तद्भावापन्ना मूर्तिर्जातेत्यर्थः ।

**गायन्त्य उच्चैरित्यत्र, प्रथमतो मिश्रभावादिति** । सुप्तप्रबुद्धन्यायेन

१०-२७-४ बहिःसंवेदनासंवेदनाभ्यां संगमविरहविषयकसमूहालम्बनज्ञानं जनितमिति तथेत्यर्थः । ननु प्रभोरानन्दरूपत्वेन तदभावेषु सत्सु सदानन्द एवोचितो, न तु वक्ष्यमाणावस्थेत्याशङ्काभावाय तस्याः स्वरूपमाहुः **शङ्के हि धूमवदिति** । अत्रेदमाकूतम् । एतावत्कालपर्यन्तं भगवता स्वरूपानन्दो न प्रकटितः । तस्य स्वरूपात्मकत्वेन तत्प्राकट्यं विना तदनुभवासम्भवात् । 'तथा परमहंसाना'मिति[2] वाक्यात् । यादृशेन भक्तियोगेन तत्प्राप्तिस्तादृक्प्रकटनायाधुनैव पुरुषोत्तमावतारात् प्रभुप्राकट्यानर्थक्यापत्तिभिया श्रुत्याद्युक्तसाधनसाध्यत्वं स्वरूपानन्दस्यैतत्साधनभक्तियोगस्य च न वक्तुं शक्यम् । अत एव 'कुन्तीभिः पूर्णसाधनवतामप्ययं दुर्लभ इति ज्ञापनायैवाधिकारिविशेषणान्युक्तानि । एवं सति स्वरूपस्य रसात्मकत्वेन अत्रत्या भावाः सर्वे रसात्मका एवेति मन्तव्यम् । अन्यथैतच्छ्रवणमात्रेणापि स्नेहोत्पत्तिर्न स्यात् । एवं सति तद्वार्तानभिज्ञस्य तवेयमाशङ्का कण्टकवेधदृष्टान्तेन कामिनीकुचकुम्भे नखवेधस्यापि दुःखहेतुत्वसाधनमनुहरतीत्यलमुक्तयो ।

---

१. तत्प्राप्त्यर्थकप्रयत्न मू पा.

२. तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविताना‍र्थं कथं पश्येमहि स्त्रियः ॥ भा. १-८-२०

मादकद्रव्यस्वभावादुन्मत्तो विवेकरहितो भवति, एवं विरहभावस्वभावजवैकल्यात्तथेत्याशयेन तत्रापि न सर्वात्मनेत्याद्युक्तम् ।

**आकाशवदन्तरमित्यत्र**[1], **शुको हीत्याद्याभासमारभ्यायमपीत्यन्तम्** । अत्रायं भावः । 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति भगवद्वाक्यात् भक्तिमार्गे ज्ञानं प्रतिबन्धकमिति मन्तव्यम् । युक्तं चैतत् । आत्मत्वेन भगवज्ज्ञाने तद्दिदृक्षादिजनितार्त्यसम्भवेन प्रभुप्रादुर्भावासम्भवात्सर्वस्वनाश एव यतः । एवं सति यत्र कालादिनियन्तृत्वज्ञानात्मकप्रतिबन्धके सत्यपि कंसादिभयज्ञानरूपः स्नेहकार्य एव देवक्यां जातः, तत्र प्रतिबन्धरहितानां स्नेहमात्रकार्यसम्भव इति किं वक्तव्यमिति कैमुतिकन्यायः सूच्यते । किञ्च । तत्र देवकीधर्मरूपं ज्ञानं प्रतिबन्धकत्वेनोक्तम्, अत्र तु विशेषणेन भगवद्धर्मस्तथोक्तः । एवं सति यत्रायमेव न प्रतिबन्धकः, तत्रान्यस्य का वार्तेत्यपि ज्ञापनायेदं विशेषणम् । तथा च हेतुसत्त्वेऽप्युक्तज्ञानाभावेन भक्त्युद्रेकः सूच्यते । एतदेवोक्तं **तासामज्ञानकथनार्थमित्यनेन** । शुकस्यैवं ज्ञानाभावे त्वेतत्कथनेऽप्यशक्तिः स्यात्, जीवनं वा न स्यादिति शुकज्ञानोक्तितात्पर्यं वेदितव्यम् । अपरञ्च । सर्वेष्वित्यादिपदमनुक्त्वा नपुंसकलिंगभूतपददानेन प्रभौ च पुरुषत्वोक्त्या यथा षण्ढस्य पुरुषनैकट्ये रसोत्पत्तिर्न, किन्तु स्त्रीणामेव, तथा प्रभुसान्निध्येऽपि भूतानां रसानुत्पत्तिः, एतासां तदुत्पत्तिश्च युक्तेति ज्ञाप्यते । तेनैतासामेव प्रभुरसाभिज्ञत्वमित्युक्तं भवति । एतावान्परं विशेषो, बहिःसम्बन्धे विलक्षणो भाव उत्पद्यते, अन्तरेव सम्बन्धे तु विलक्षण इति । कात्यायनीस्वरूपनिरूपणप्रस्तावे कथितं स्त्रीत्वमत्र विवक्षितमतो न शङ्का कापि । अपरञ्च । भगवति दृष्ट एवासां बहिरिदमन्तरिदमिति ज्ञानम्, अधुना तदभावेन तयोरप्यभावादप्यन्तरस्यानुसन्धानमुचितम् । परन्तु प्राप्तिरपेक्षितेति यत्र कुत्रचित्प्रश्न इत्याशयेन बाह्याभ्यन्तरेत्यारभ्य पृच्छन्तीत्यन्तेनोक्तम् । सर्वत्रैव विद्यमानमित्याद्यविशेषणतात्पर्यम् । 'पुरि हृदयाकाशे शेत' इति व्युत्पत्त्या आत्मनोत्यादिद्वितीयविशेषणस्य । यद्वा । प्रकरणाद्भक्तिमार्गाद् भगवता ये बहिर्भाविता जीवास्ते बहिर्भूतपदेनोच्यन्ते । तथा च तेष्वेवाकाशवन्निराकार इवाप्रत्यक्षतयैव सन्तं तत्राप्यन्तरमेव न तु कदाचिदपि बहिःप्राकट्येन । वस्तुतस्तु भक्तिमार्गीयेषु पुरुषत्वेन साकारं बहिःप्रकटं भर्तृरूपमनो बहिर्विचयनमेवोचितम् । न हि स्त्रीणां स्वभर्तुरन्तरन्वेषणमन्त स्थितिज्ञानं वा स्वाख्यहेतुः पुरुषार्थाय वा भवतीति मूलार्थ ।

**नन्दसूनुर्गत इत्यत्र**, **प्रभुपुत्र इति न ज्ञात इति** । चोरत्वेन न ज्ञात

---

1.—मित्यस्य मू. पा. ।

१० २७ ५ इत्यर्थः । प्रभुपुत्रो यतो न चौर्यं करोतीति भावः । **प्रेमहासावलोकनै-** रित्यत्र, **तमो रज** इत्यादि । यस्य यादृशं मनस्तस्य तादृश्यैव रीत्या तद्वरतीति भावः ।

**तुलस्यास्तदुभयमिति** । पुष्पवृत्त फलवृत्तश्च यो [1]द्विविधविनियोगस्तदुभय
१० २७ ६ नास्ती यर्थः ।

**क्वचित्तुलसी** यत्र, **सा चे**यादि । पूर्वं हि भक्तत्वेन निष्कामा निरन्तरं चरणारविन्दमेव सेवमाना स्थिता, लक्ष्म्यादीनाम यत एवैषा पूजासाधनम यथा
१० २७ ७ सपत्नीत्वं ज्ञात्वा तथा लक्ष्म्यादयो न कुर्युः । तथा सति नायिकात्वे यो रसः स नानुभूतो भवतीत्यस्मदादिमज्ञात्वा तृष्णीं स्थितेति मत्वा तथाहुरित्यर्थः । **अस्मदा दिपेक्षयेति** । रूपवत्स्थानित्वपद्वृत्तदेव्यादिभावज्ञापनार्थमुक्तम्, रूपयथा सपत्नीत्वं ज्ञात्वापि नेमा पृच्छेयुरिति भावः ।

**बाहुं प्रियास** इत्यत्र, **समतया गमनेने**त्यादि । यद्यपि चरणचिह्नादर्शनेपि भगवद्भावस्वभावादेव तल्लीलास्फूर्तिः सम्भवति, अत एवाह्निपु तुलसिकासम्ब
१० २७ १२ न्धि वाक्ति, तदनुसारेणाग्रे गमनाभावश्च, तथाप्यधुना प्रियदर्शनवता ज्ञापित. प्रियः शीघ्रं प्राप्स्यन इति ज्ञात्वा प्रश्नपरा इति, तत्रापि मत्तदशा तस्य।क वादयनरहिता इति चिह्नदर्शनेपि तं मार्गेण न गताः । किञ्च । यथा सहभूताया अपि स्वामि याश्चरणचिह्नादर्शनं पूर्वं पश्चाच्च दर्शनं तथैवा येस्तैरन्य पददर्शनं, नाग्रे । तीक्ष्णभावस्य यथैव पदचिह्नानां दर्शितं वात्तस्य च तावैर गात । अग्रे तु भगवद् कृतकार्यत्वेन वक्ष्यत इत्याशयेनाचा येरेवमुक्तम् । पश्चात्तु यत्र पतालिङ्गनकारणत्वं नैव गृहीतपक्षस्त्व ज्ञायते, तनाञ्जसा तदपीडनेन च तत्सम्भवात् । मदस्य सङ्गाभावत्तु नानुभूयते । तेषां च समदानामपि सङ्गे मर्यादामार्गीयभक्तिरसजनित एव मदो भवितुमर्हतीति तुलसीसम्बन्धकथनम् । अनवसरेपि गमनामदा धतोक्ता । एव रसासक्तत्वेनानुसन्धानासम्भवात् स्वमिलन दुर्लभं नान्ती तरप्रणाम चदनुसन्धानसम्भवेपि समय तत्राप्यानपि यदाभिदनुसन्धानस्यतो वाशयेन प्रश्नं चक्रे । अन्यथाऽलीनाम न तासामपि तथाप्यन्तरप्रेम यभिन्न दन प्रश्नोऽनुपपन्नः स्यादिति भावः ।

**लीला भगवतस्तास्ता** इत्यत्र, **भवत्यातिमत्ता** इत्यादि । एतासां प्रियेस्नेहसाम्येपि क्वचिद् भगवद्भावः क्वचित् पूतनादिभावः इतुमाहुः **भवत्ये**यादि ।
१० २७ १४ नायिकाभेदेन भिन्नभावभेदः । एकस्या अपि समयान्तरहेतुभेदेनापि तथा । एवं सति भगवल्लीलानामसम्बन्धिना मध्ये यस्या यदा यादृशस्य यस्य स्मृतिस्तस्यास्तदा तद्भाव

[1] विधियो विनियोग इति पाठः । द्विविधविनियोग स्यादपि ।

कत्वं विशुद्धभावत्वाज्जलादिसम्बन्धिस्फटिकस्येवेति प्रघट्टकार्थः। तथा च भगवन्मात्रज्ञानमतिमत्तत्वम्। तत्सम्बन्धिनामपि ज्ञानमीषन्मत्तत्वम्। लीलासम्बन्धिनां येषां ये भावास्तदात्मकतायां ते भावा अपि स्वत एव भवन्तीति ज्ञापनाय **रोपत** इत्यादिना तदुद्देशः कृतः। भावेषु दृष्टान्तेन वैजात्यज्ञापनाय **सत्त्वायुक्ति**। ननु तथापि भगवज्ज्ञानं विहाय पूतनादिज्ञानं यत्र, तत्र ततो न्यूनभावता गम्यते, तत्र हेतुरपि वक्तुं न शक्य इत्यरुच्या पक्षान्तरमाहुः **अतो न न्यूनभाव** इति। हि यस्माद्धेतोः शकटादिभिराविष्टा अतो न न्यूनतेत्यर्थः। अत्रैवं ज्ञेयम्। अत्र तापलीलाभगवतामन्योन्योपमर्दकभावेनाविर्भाव इति पूर्वमुक्तम्। सपदि तु लीलाया आविर्भाव एतामूच्यते। सा च भगवत्कृतितत्सम्बन्ध्यात्मिका विशिष्टा, न त्वन्यतरमात्ररूपा। तथा च यदंशो यत्राविर्भूतस्तत्र स एवांश उच्यते, अन्यथा पूतनासुपयःपानसामयिकदशापन्नभगवत्स्वरूपभावापन्नैव पूतनायन्त्याः स्तनं कथं पिबेत्। पूतनायन्ती च तस्यामेव पूतनावत् कथामाचरेत। अतो न क्वापि कुतश्चिन्न्यूनतेति सारम्। अस्मिन्पक्ष एका लीला यत्राविर्भूता तत्र न द्वितीयेति सिध्यति। तथा सति चिरं विलासो न स्यादिति पक्षान्तरमाहुर्भगवद्भावापन्नायाः सकाशात् पूतनोदूखलादिभावापन्ना उत्कृष्टा इति ज्ञापनाय **सर्वत्रेति**। अत्युत्कटविरहभावेनातिदीनतया कथञ्चिच्चरणसम्बन्धं वाञ्छन्त्यो यत्र तत्सम्बन्धः पूर्वमनुभूतोस्ति तद्वदाचरन्ति। मयि चेन्न चरणं स्थापयति, तदा पूतनोलूखलादिवुद्धयापि वा स्थापयत्विति भावेन अत्यार्त्यैव सर्वत्र भगवद्बुद्धिः। अतस्तस्य प्रकर्षेण सिद्धयर्थं तथेत्यर्थः। **पुनरिति** पदादेकस्या लीलायामनुकृतायामप्युक्तरीत्यात्यार्तौ पुनरुलूखलादिभावोपि भवतीति ज्ञाप्यते। एवं सति भावप्राचुर्यादत्रोत्कर्षः सिद्ध इति भावः।

**कस्याश्चित्पूतनायन्त्या** इत्यत्र, **अन्या अहं कृष्ण इत्युक्तवतीति**।

१०-२७-१५. यद्यप्यत्रोक्तिप्रयोजनं नास्ति, पूतनासुपयः[1]पानदशायामुक्तिप्राकट्याभावाच्च नैवं सम्भवति, तथापि यदा तदा पूतना मां गृह्णात्वन्यथा तु कार्यं न भविष्यतीति भगवदिच्छा स्थिता, तथा कृष्णत्वेनेयं मां जानात्विति कृष्णायन्त्या अपि तदेच्छासीदिति ज्ञापनपरा तदुक्तिरिति ज्ञेयम्। **तस्यास्त्वि**त्यादि। अत्र मुख्योपपत्तिर्भावनयैवाविर्भूतेत्यादिना पूर्वमेवाचार्यैरुक्तेति सर्वमवदातम्।

**तत्रैकोवाचे**त्यत्र, **विरहेण दावाग्नि दृप्यती**त्यादि। अत्रेदमाकूतम्।

१०-२९-२२. भगवता यदेयं लीला कृता, तदा पूर्वं गोपैर्दावाग्निर्दग्धः, ततः प्रार्थितः प्रभुः, अत्र कथं तद्वैपरीत्यमुच्यत इति शङ्कानेन निरस्यते। अतिविगाढभावत्या एव भगवद्भावो भवति। तादृश्या एव च हृदये विरहाग्निः प्रकटो भवतीति सैव

1. पूतनासुपानदशायामुक्तिप्राकट्याभावाच्च मू. पा.।

स्वामिनी तं[1] दृष्टवती । तदेतदुक्तं विरहेणेत्यादिना । तदा पूर्वं ततः पालनमेव कृतमि-त्यधुनापि स्वामिन्या रक्षैव सम्पन्नेति भावः । अथवैतस्या एवैतल्लीलाभावनाभूदिति सैवो-क्तवतीत्याहुर्भावनया वेति ।

यातायां नन्दसूनुनेत्यत्र, प्रभो सद्भावोक्त्या गौणत्वेन सूचितमर्थमाहुः
१० २७ २७ तथैव मायेणेति ।

भगवान्हरिरीश्वर इत्यत्र, वैलक्षण्यज्ञापनार्थमिति । तादृशं कर्म स्वकृतमिति
स्वदोषज्ञाने मत्सर्यजं दुःखं न भवतीति तथेत्यर्थः । तुल्यफलत्वेनेति ।
१० २७ २८
यादृक्कर्म तादृगेव फलमिति तुल्यफलकं कर्म भवति । तथा च यथास्मास्वपि कर्मवैलक्षण्येऽप्यस्मान् भक्तिमार्गेऽङ्गीकृतवानिति सा च तुल्येति तुल्यं फलं दत्तवान्, तथा चेत्तामप्यङ्गीकुर्यात्तदास्मत्तुल्यैव भवेत् । [2]तस्यामाराधनबललक्षणं धर्माधिकमस्तीति तां तं मार्गे युतोऽङ्गीकृतवानित्यर्थः । [3]गोविन्दपदतात्पर्यनिरूपणे साधारणेन्द्रोऽपीति । यद्यपि 'इति गोगोकुलपतिं गोविन्दमभिषिच्य चे'ति वाक्यात् साधारण्येन सर्वस्यैव गोकुलस्येन्द्र, न तु विशेषेणैकस्य कस्यचित् । अतस्तादृशस्यास्मदपेक्षया विशेषेणैकस्या भोगोऽनुचित, तथापीश्वरत्वात्तथोपपद्यत इति भावः ।

धन्या अहो इत्यस्याभासे, स्वभाग्याभिनन्दनमपीति । चरणसम्बन्धाद्
१० २७ २९. धूना धन्ययोक्त्या स्वस्यापि तथात्वात्तथात्वमायातीति तथा ।

रेमे तया चात्मरत इत्यत्र, पुष्टत्वात्कामस्येत्यादि । यथा प्राकृतः कामी
महानपि केवलं स्वार्थपरः सन्स्वयं यदि सुखी भवति तदा स्वस्नेहेऽपि
१० २९ ३४
दुःखिनं नानुसंधत्ते तथा । यथात्मारामत्वलक्षणं स्वधर्ममप्यतिक्रान्तवांस्तथा-ऽस्मद्दुःखमप्यविचार्य स्वार्थमेवैतां सम्पादोद्भटभाव स्वयं तादृश्यैव तया च रेमे इत्यर्थ इत्याशयेनोक्तं पुष्टत्वादित्यादि । तथा च स्वधर्माविचारकस्य परधर्माविचारे किमा-श्चर्यमिति भावः । एवं सत्यात्मरत इत्यस्य स्वार्थपरत्वमर्थः पर्यवस्यति यतो न पौनरुक्त्यमिति ज्ञेयम् । एवं सकामत्वेऽपि न निष्कामताक्षतिरिति ज्ञापनायात्मारामत्वोक्तिरित्याशयेनाहु-र्निष्काम एवेत्यादि । प्रकारान्तरेणाप्यपौनरुक्त्यमित्याशयेनात्मरतत्वं प्रकारान्तरेणाहुः रसाधारत्वायेति । अत्रेदमाकूतम् । रसो भगवान्भगवत्तस्तस्य च स्थायिभावात्मक-त्वात्तमेतस्या प्रकटीकृत्य रेमे । अथवैतद्भावानुभवासम्भवात् । न तु प्राकृतभावे सतीति । यद्वा । आत्मरत इत्यात्मपदं स्वामिनीवाचकम् । तथा चात्मारामोऽपि तयात्म-

१ 'तं' इति मूलपाठे नास्ति । २ आराधनलक्षणमिति तु मूलपाठः ।
३ 'गोविन्द'इत्यारभ्य भाव इत्यन्तं क्वचिन्नास्ति।

रतः कुतो रेमे । चकाराद्विशेषरमणं विविधबन्धादिविशिष्टमुच्यते । तथा सति नखदशनादिकार्यसम्भवेनाखण्डत्वशङ्का स्यात्, तन्निरासायाहुरखण्डित इति । यथा तस्या रतोऽप्यात्माराम एव तथा दशनादिभिः खण्डितोऽप्यखण्डित एवेत्यर्थः । **कामिनां दर्शयन्दैन्यमित्यत्र, कामिनस्त्विव यारम्य एवं रेम** इत्यन्तम् । अत्रायमर्थः । पूर्वमात्मारामत्वेनस्या तादृशोऽपि सन्यन्नायिकाधीनत्वमेव भजते तेन रसात्मको रसवाश्च भगवानेव, अये तु कामिनो रसाभासिनो मलपूर्णे वस्तु यासक्त्या बीभत्सरसपूर्णा भ्रान्ताः सन्तस्तादृशीष्वेव । दैन्यमात्रं फलं लभन्त इति ज्ञाप्यते । किञ्च । आत्मारामोपि यद्रसपरवशस्तत्रैव रसभरवशेन मानादिकं भवति, अन्यासु तु रसाभावान्न स मानः, किन्तु दौष्ट्यप्रकटनमेवेति । एतेनात्मारामस्यापि प्रभोर्यत्र रतिस्तत्रैव रसो नान्यास्विति फलितम् ।

**गां गोपीमित्यत्र,** बहिःप्रियसम्बन्धेन्तरायहेतुत्वेन माने दोषत्वोक्तिरिचूर्ताविति ज्ञेयम् । समानरसत्वेप्येतासां तदा मानोऽभूदेकत्र । तत्राप्यधुना सोऽभूत्, तत्र
१० २७ ३५ हेतुमाहुः **स्वगत्ययुक्तकरणादिति** । नायिकानां हि प्रकृतिः सदा मानिनीत्वम् । प्रकृते चैयदवधि नायकाधीनत्वमेवाङ्गीकृतमिति स्वस्यापि नायिकाप्रकृतेर्या गती रीतिस्तस्यामयुक्तकरणान्नायकाधीनत्वेन स्थितैर्नायिकाप्रवृत्तिनिवृत्तिहेतुत्वेनाधिकारिण इवाधिकारिणो ये, आदितश्चात्प्रौढा भावास्ते पूर्वभावान्कोमलान्नाशयामासुरित्यर्थः । 'स्वय' त्वयुक्तेति पाठे स्वयंपदं स्वामिनीपरम् । शेषं पूर्ववत् । ननु पूर्वमेवास्या अपि स्वामिन्या मानः कुतो नाभूत्, रसप्राप्तेस्तुल्यत्वादिति चेत्, उच्यते । भगवान् हि भक्तेभ्यो भजनानन्दं दातुं लीलां करोति, स्वस्य तद्रसानुभवार्थं च । तथा च बह्वीष्वपि प्रियासु सतीष्वेकस्याः पृथङ्नयनेन विशेषरमणे यो रसः स न सम्भूय रमणे । स च स्वरूपात्मक एवेति तत्स्वरूपं प्रकटीकृतवानिति न काप्यनुपपत्तिः । पूर्वं मानाभावे स्वामिनीभिरेव हेतुरुक्तोऽनयाराधित इत्यादिना ।

ततो गत्वेत्यस्याभासे, **दोषाभावेनैवे**त्यादिना इमान्यवक्तुस्तात्पर्यमुच्यते । शक्तौ सत्यामपि प्राकृतकामिवत्कामाधीनत्वेन स्ववशव्रजानेभ्याशक्तिमत्यां पदं
१० २७ ३७ स्वस्कन्धेनापि नेष्यतीति ज्ञानं भ्रमः । यथा भगवद्रमणे दोषभावासम्भवा-द्भगवद्भावात्मकत्वेव सौभाग्यमदमानाविति 'तासां तत्सौभगमद'मित्यत्र निरूपितम्, तथा प्रकृतेपि प्रियाधीनत्वभावेनात्र रसो दत्त इति स एव भावोत्राजनि, न तु दोषरूपः । स एव हित्वा गोपीरित्यनेनोक्तः । [1]एवं सत्यत्र विप्रयोगात्मकरसाननुभवे पूर्णरसदानं न भविष्यतीति ज्ञात्वा प्रभुः संयोगरसदित्सासंकोचमकरोत् । अयमेव भावः क्रियाशक्ति-

1 ततो गोपीत्यनेनेत्यादिप्रभवनापमाहु एव सतीत्यादि ...

संकोचप्रकाशको न पारयेहं चलितुमित्यनेनोक्तः । अन्यथाऽनृतवादित्वं स्यात् । न हि भगवत्प्रति तदीयानामेव सम्भवति । स स्वतिपूर्णरसानिर्भरेण स्तम्भरूपः सात्त्विकभावो भवितुमर्हति । इत्येव स्वमर्यादात्वम् । तथा चोक्तरीत्या निरवधिरसदातुरस्य संकोचेच्छा रसमार्यादिकी न भवतीति तदभावोदयोऽत्र इत्यपदेनोक्तः । रजस्तमोऽधिष्ठात्रोरपि तज्ज भाव दूरीकृत्य अमृतदाते यत्रापि पूर्णरसदानार्थमेव तदभावजननं स्वतिरोधानं चेति ज्ञापनाय स्कन्धपदोक्तिः । एवं सति पर्यवसानतो रसमार्यादिकीत्वमप्युक्तेच्छाया ज्ञायते । [1]प्रिया त्विमं धृत्वा तमजानन्ती पूर्ववदेव प्रियः करिष्यतीति ज्ञात्वा 'नय मा'मिति क्रियाशक्तिं प्रार्थितवती । परन्तु यत्र ते मन इत्यज्ञाताप्युक्तेर्भगवन्मन उक्तकार्येऽस्तीति पूर्ववत्क्रियोद्गमस्याशक्यत्वादुभयो[2]: प्रभुरन्तर्ययमेवोपदिष्टवान्प्रियायाः स्वस्कन्धारोहणम्, न तु स्वस्य । अग्रिमरसदित्सया प्रभुः स्वहार्दं न ज्ञापयतीति प्रिया प्रियस्कन्धमेव बुद्ध्वा तथैव कर्तुमुद्यताभूत् । तदा प्रभुस्तथाकरोत् ।

एतत्सर्वं हृदि कृत्वाचार्यैरुक्तमेषा हि नृत्यमित्यादि । नटो हि नृत्यचेष्टया स्वान्तःस्थं रसं द्रष्टारमनुभावयति । एतद्धर्मसाम्येनात्रापि नृत्यपदप्रयोग कृतः ।

१०-२७-३८ एतदेव विवृतं स्वान्तरित्यादिना । पूर्वं प्रभुणा सर्वथा तदधीनत्वेन रसो दत्तः । सोऽन्तःप्रियाया अस्तीत्यधुना स्वयं तं रसं प्रियमनुभावयितुं याकृती प्रकटयति । तथाशक्यम्, भक्तस्नेहेनैव तद्वशीभूतस्तथा रमते, न त्वन्यथापि । प्रकृते हि 'न पारयेह'मित्यादिस्नेहरीतिविरुद्धम् । यद्रसमार्गाविरुद्धमिति तथा कर्तुमुचितं भवतीत्युच्यते, तत्र साधीयः । तथा सति रसस्वाभा येन प्रिया तं स्थरसच्युते किं प्रियमनुभावयेत्, अग्रिमरसदानप्रतिबन्धश्च[3] भवेत् । इदमेवोक्तं तद्भूमावित्यादिना । एतदर्थस्तु । तत् उक्ताभिनयनम् । भूमौ स्वान्तर्लक्षणस्थानं त्याजयित्वा बहिःस्वप्रौढ्या तत्प्रकटने न सम्भवतीति शेषः । तत्र हेतुरूर्ध्वभावेत्यादि । स्वान्तर्गुप्तो हि रसामृताब्धिरुच्चरोच्चरं भावतरङ्गाननुभावयति । इदमेवोर्ध्वभावत्वम् । स एव बहिः प्रकटितो रसत्वादेव बहिर्भवति । [4]अतोयमेवोर्ध्वभावाभाव । च्युतः स्वरूपत एव नष्टो भवेदिति यावत् । अलौकिकरसाभिनयनम् । विरहेणार्त्यादिप्रकटनं तत्, लौकिकरो या स्वाधिक्यज्ञापनं भूमौ पदस्थापनम् । तस्मिन्सति तन्न सम्भवतीत्यर्थः । अशक्ता चेदिति । 'यत्र ते मन' इति प्रौढ्या, न तु प्रार्थनरीत्या, सत्येन कथं वदेदित्यर्थः ।

(एवं सति भङ्ग्यन्तरेणाप्येतद्याकृतिः सम्भवति । तथा हि । भगवता हृदये प्रियायै पूर्णः स्वरसो दत्त इति भगवन्निष्ठा भावा सर्वे हृदि स्फुरद्रूपा[5] जाताः । तथा

१ एषा हि नृत्यमित्यादिमन्यना पर्यमाहु प्रियेत्यादि । २ सयोगविप्रयोगयोरित्यर्थं ।
३. प्रतिबन्धश्च मू पा । ४ अथमेवो—मू पा । ५ स्फुरिता मू पा ।

च सर्वत आधिक्यमपि स्वस्मिन् स्फुरितम् । तदुक्तं हित्वा गोपीरित्यादिना। एवं सति द्वितीयरसलीलाचिकीर्षा यदाभूत्सापि हृदि स्फुरिता। तामविषह्यां मन्यमानापि न कातरा जाता, किन्तु पूर्वरसगरिम्णा दृढा सती प्रियमब्रवीत् । एतदेव इत्था-पदेनोक्तम् । दुष्टगुणव्याप्तयोरप्यमृतं ददाति । अहं त्वेतद्गुणैरेव पूर्णेति अवश्यं सुखमेव *दास्यति, न दुःखमित्यभिप्रायज्ञापनाय* **केशवपदम्** *। ततो भोगस्थानादग्रे वनसम्ब*-न्धिमुत्कृष्टं देशं स्वयं स्वेच्छया गता, न तु प्रियेण नीता । [1]*गत्वाऽब्रवीदित्युक्त्या प्रियनै*-कट्यं ज्ञाप्यते । तेन तदधीन एव प्रियस्तत्संगे गत इति ज्ञापितं भवति । अथवा । वनमित्युद्देशो नाममात्रम् । वस्तुतस्तु महारससंनिधानम् । तेन रसोद्दीपकमित्युक्तं भवति । एतादृशे वने मद्वियोगेन मां विचिन्वन् यदि प्रियो भवति, तदा कीदृशो रसः स्यादित्याशयेनाब्रवीत्। [2]अत एव इत्थात्वमुक्तम् । पूर्वरसातिमदात्तथा चेत्करिष्यतीति तदाह चलितुं स्पन्दितुमपि न पारये। *जीवनमेव न संपत्स्यत इति भावः । एवं चेत् किं कर्तव्यमित्याकाङ्क्षायामाह* **नयेति** *।* यत्र स्वान्तर्धाने ते मनस्तत्रान्तर्धाने मां नय, तिरोहितां मां कुरु, त्वं मा तथा भवेत्यर्थः। प्रियस्त्विदमत्यशक्यमित्याशयेनोत्तरयति **स्कन्धेत्यादिना**। यथा स्वस्कन्धारोहणमशक्यम्, तथा मत्तोऽन्तर्धानं भवत्या । न हि पूर्णज्ञानशक्तेरविषयः कोपि भवितुं शक्नोति । यद्यपि विरुद्धसर्वधर्माश्रयत्वेन रसात्मकत्वेन च जानन्नेवाजानन्नपि भवितुं शक्नोतीत्येवमुत्तरं *न सम्भवति, तथाप्यत्रातिप्रीतिविषयत्वेन तं धर्मं प्रकटयितुं न पारय इति भगव*-दाशयज्ञापनाय *प्रियापदमुक्तम् । उत्तरदानमप्यत एव । अन्यथा त्वेवमुक्तस्तूष्णीं तिष्ठेत्तिरो*-धीयेतैव वा । **प्रियात्वान्ममाशक्यं** भवत्यास्तिरोधानम्, तत्सामर्थ्याभावाद्भवत्याः [3]स्वतस्तिरोधानं [4]तथेति भाव । एवं सति प्रियया प्रार्थितं देयं यद्यपि, तथापि प्रियात्वेन स्वाशक्यमिति लक्षणो यो हेतुस्ततो हेतोः स्वयमेव तथाऽकरोदित्याह **ततश्चेति** । एवं करणे प्रभुनिष्ठं हेतुमाह **कृष्ण** इति । अस्यां दशाया हृदि प्रकटः सन्नेवानन्दात्मकनवरसपोषको यत इत्यर्थः । ) इति सप्तत्रिंशोध्यायः ॥

**अष्टात्रिंशोध्यायार्थोक्तौ, स्वभावादपराधत** इति । तदवस्थाया एव स्वभावो
यद्गुणगानमेव भवत्येव । अतस्तत्स्वभावादेव गानं चक्रुरिति सम्बन्धः ।
१०-२८०. पक्षान्तरमाह **अपराधत** इति । भक्तेभ्योपि स्वस्मिन्नाधिक्यज्ञानलक्षणमपराधं प्राप्यास्मान्यदि *प्रार्थयिष्यति, तदा रसं दास्याम इति मानलक्षणा कृताऽवज्ञा याभिस्तादृश्यो* यतोऽतः स्तोत्रं चक्रुरित्यर्थः। अवज्ञयाऽप्रसादे स्तोत्रेण प्रसादो भविष्यतीति तथेति भावः । यद्वा । स्वभावादसत्स्वभावाद्दोषापराध इत्यग्रे पूर्ववत् । स्तोत्रमिति गानविशेषणम् । तथा च

---

१. 'गत्वा' इति नास्ति मूलपाठे । २. अतो इत्थात्वमुक्तम् । मू. पा. ।
३. भगवतः । ४. स्वस्कन्धारोहणतुल्यमित्यर्थः ।

स्तोत्ररूपं गानं चक्रुरित्यर्थः । अग्रे गुणकथनं भाववैजात्यज्ञापनार्थमिति ज्ञेयम् । गूढाभिसंधिना पक्षान्तरमाहुः अथवेति । प्रार्थनाश्च ता आद्याश्च प्रार्थनाद्या याः प्रथमद्वितीयतृतीयपञ्चमषष्ठसप्तमाष्टमश्लोकैः कृता, अन्ते त्रयोदशचतुर्दशाभ्यां च सान्निध्यात् कुमारिकाभिः कृता, अन्ये तु प्रौढाभिरुक्ताः श्लोकाः । चतुर्थ्यो गुणातीतभावापन्नाः कोमलभावा इति यावत् । अतस्तथा श्लोकसङ्ख्येत्यर्थः । ननु 'तदागमनकाङ्क्षया जगु'रिति वचनादन्यथा माननापराधाद्रन', तथा स्तोत्रेण सन्तुष्ट आगमिष्यतीति भावो लक्ष्यते, एवं सति दोषारोपादेरनुपपत्तिः इत्याशङ्क्य गूढाभिसंधिमुद्घाटयन्त स्तुतिस्वरूपमाहुः तत्तदिति । स्तुतिर्हि यथाधिकारं भवति । एतासामेतादृश एवाधिकारो येन कुहककितवादिवचनेनापि स्तुतिस्त्विम् । अन्यथाग्रे तथानुवदिष्यस्तदागमनकाङ्क्षया जगुरिति न वदेत् । न ह्येवं ब्रह्मादिभिरपि वक्तुं शक्यम् । तथा च स्वस्वभावोद्गिरणे तच्छ्रवणेन प्रभोः परमसन्तोष इति तासां भाव एव निरूप्यत इत्यर्थः । विपक्षे बाधकमाहुः अन्यथेति । यथा स्तुतिवदत्रापि स्तुतिरूपमेव स्यात्, न भावमात्रनिरूपणम्, तदोपालम्भादिप्रकारैरनेकरूपता स्तुतौ न सम्भवतीति सा नोचितेत्यर्थः ।

सुरतनाथेत्यत्र, ( सुरतं सम्भोग इत्यादेरयमर्थः । रतं लौकिकं भोगशब्दवाच्यम् । तत्तु सृष्टिमारभ्य प्रवर्तते । तत्र न भगवदाज्ञापेक्षा । [1]सृष्टिसमानयोगक्षेमत्वात्तस्य । एवं सति सुष्ठु अलौकिकं शोभनरूपं यत् रतं तत् सम्यग्भोगशब्दवाच्यम् । तदस्मास्वेव त्वदाज्ञयेत्यर्थः इति यावत्, तथैव प्रवर्तते । यतो जगत् लौकिकं गच्छति, नश्यत्येव, न तु स्थिरम् । अतो यदलौकिकं स्वरूपानन्दरूपं तत्र प्रकटीभवितुं नार्हति । एतादृशस्य तस्य भवानेव नाथः । प्रवर्तको रक्षकश्च । एवं सति स रसश्चेत् त्वय्येव निरुद्धस्तिष्ठेत्, तदा स्वलौकिका अपि भक्ता [2]शुद्धहृदया भवेयुरिति स्वदिच्छां ज्ञात्वा स्वा प्रार्थयित्वा 'नादर्शीर्येव प्रकटीकृता', यत्र प्रतिबन्धनिवृत्तिः । अत एवाग्रे 'विखनसार्थितो' इति वक्ष्यते । कामो भगवदीयः । मनसः पूर्वरूपत्वात् चात्र [4]तत्स्वरूपत्वात् 'मनश्चक्रे' इत्युक्त्वा 'जगौ कलं वामदृशां मनोहरम्' 'तां दृष्ट्वान्तिकम्'मित्यादिकं च वामपमलौकिकभावप्रवर्तकं स्वप्रियास्विच्छयान्ययेनाज्ञापदमुक्तम् । 'मैवं विभोऽर्हति'त्यादिवाचा भगवद्भावमस्त्वात्तामामप्यानारूपत्वमित्याशयः । तैरेव वचनैः प्रतिबन्धनिवृत्तिरपि । )

[1] १०२८२

अतो ब्रह्मणेति । अत्रायं भावः । 'ब्रह्मादयो बहुतिथं यदपाङ्गमोक्षकामा' इत्यत्र भगवद्भक्तकामाः सन्तः साम्प्रतमलभमाना श्रियापाङ्गा भावोद्गारिणो निरन्तरं प्रियसङ्गतत्वेन तद्भावाभावमन्तः प्राप्ता इति तत्सम्बन्धे तदनुभावेन कदाचित्स भावोऽपि

१ सृष्टिप्रमवल लौकिकत्वादिति पाठः । २ शुद्धहृदया इति पाठः । ३ सदृश इति स्यात् । ४ पैनाकर्षत्वादिति ।

-भवेदित्याशया तत्कामास्तपश्चरन्तीति निरूपितम् । प्रकृते च स्वयं प्रभु प्रकट इति तु मार्गप्रकटनार्थं द्वारभूता वयं तेन प्रकटिता इति । अत्र सुरतशब्देन सुष्ठु भगवता सम रत येनेति भगवद्भाव एवोच्यते, न तु सम्भोग, तस्यापामरमनुवर्तमानत्वेन त्वदाद्येयादिना नाथत्वविचारण यत्तदनुपपत्तेः । एतन्मार्गप्राकट्येन ब्रह्मणो न कोपि भावः सिद्ध इत्यरुच्या पक्षान्तरमाहुः कामेन वेति । भगवदीयमानरूपेणेति ज्ञेयम् । स्वामिनीदर्शने हि भगवतो भाव उद्रिक्तः सन् कामकार्यं करोत्यतस्तेनैव स्वार्थं वयं प्रकटीकृता इत्यर्थः ।

सख उदेपिवानित्यत्र, पूर्वमपि सखा यथेच्छमित्यादि । 'सुपर्णावेतौ सयुजौ
१० २८ ४ सखाया'विति श्रुतेरन्तरात्मा जीवस्य सखा भवति । प्रकृते च स्वरमणेच्छा-
मनतिक्रम्य तदनुरूपमेवास्मान् प्रेरयसीत्यर्थः । अत एवास्माकं नायिकाभाव एव सार्वदिक इति भाव । एतादृशस्यागमन नायिकायै स्वसमर्पणार्थमेव भवतीति सदैव कर्तुमुचितमिति भाव इत्याशयेनाहु' आगतस्येत्यादि ।

दिनपरिक्षय इत्यत्र, विभ्रमपदतात्पर्योक्तौ, क्षान वा भवेदिति । भक्त्यात्मकत्वात्
१० २८ १२ सुखस्य स्नेहरसानुभव एव स्यादित्यर्थः ।

प्रणतकामदमित्यत्र, अथवा यल्लोक इत्यादि । लौकिककामखण्डनैश्वर्य
१० २८ १३ स्वकामदानालङ्करणापद्दूरीकरणात्मक पञ्चविधमुपकार करोति तच्चरणपङ्कज
लापनिवारणात्मकमेकमेवोपकारमस्मासु करोत्वित्यर्थः । पद्मजैरर्चितमिति चरणपद्मजैर्नखैस्तथेत्यर्थ । लोके तेषां सयोगिद्रव्य वेपि भगवन्नखाना सच्चिदानन्दरूपत्वेन स्वरूपात्मकत्वेन तथा वक्तुमशक्य यद्यपि, तथापि स्वस्याधुना चरणसम्बन्धेयार्त्या अदेव तत्सम्बन्धि तदेव पूर्णसाधनमित्याशयेन तथोक्तम् । अस्मिन्पक्ष उपपत्तिमाहुरन्यथेति । उक्तारुच्यैव पक्षान्तरमाहुस्तत्तुल्य वेति । तैरतिशोभा । अतस्तैश्चरणपद्म पूजितमिव भवतीत्यर्थः । ध्वजादिचिह्नानि चोक्तरूपाणि ज्ञेयानि ।

रहसि संविदमित्यत्र, गुणत्रयसहितमिति । मधुरत्वगुह्यत्वस्वबुधम
१० २८ १७ नोज्ञत्वलक्षण गुणत्रय ज्ञेयम् । रहसि संविदो ज्ञानानि येन वाक्येन तत्तथा ।
वाक्यनिरूपण सति यादृश तदस्ति तादृशमेव प्राप्यत इति गुणत्रयसहित-मित्युक्तम् । अथवा । कारणत्रयस्यैव विशेषणमिदम् । कारणादेशो वाक्यमित्यादिना कृत । कामेत्यादिना गुणाना बन्धादिबोधकत्वेन वाक्य कामोद्बोधकम् । हास्यमानन्दस्य । श्रीधामत्वेन रसाधिकारिणो बोध्य ते ।

एतावन्निरूपणेन भगवत्प्राप्तौ भक्तकृतसाधनस्य यावती पराकाष्ठास्ति तावद्युक्ता
जाता, भगवता च भक्तानां स्नेहपरीक्षायां क्रियमाणायां यावती तस्याः
१० २८ १९ पराकाष्ठा, साप्युक्ता जातेत्युपसंहरति 'एवं साधनेति । अत्र यावत्ताव
दित्यव्ययपदे । तथा चाकारीयां साधनपरीक्षयोर्यावत्स्वरूपं तावद्रूपस्तयो निरूपित
इत्यर्थः[1] । इत्यष्टाविंशोऽध्यायः ॥

एकोनत्रिंशाध्याये तासामाविर्भूदित्याभासे, ब्रह्मा विष्णुरित्यादि ।
अत्रेदमाकूतम् । आद्यकल्पे भगवानेव चतुर्मुखो ब्रह्माभूत्, तपश्च पूर्वं
१० २९ २ कृतवान् । स वाच्यवाचकतया 'भगवान् ब्रह्मरूपधृक् नामरूपक्रिया धत्त'
इति वाक्यात् छन्दांसि य विदु'रिति वाक्याच्छन्दसृष्टिमर्थसृष्टिं च कृतवान् । तदेवानुप्रविश्य
सर्वं कार्यं[1] कृतवान्, रस्य रजोरूपश्च । प्रकृते च पूर्वं रजोरूपमानरूपेणाविर्भूतः,
ततस्तापरूपेण, ततो विविधगानप्रलापरूपेण, ततो विविधलीलारूपेण । विष्णुश्च
विक्षेपरहितं शुद्धसत्त्वं सत्त्वो यथा यस्य पालनं भवति तथा पाति । प्रकृते च सम्बो-
धनवचनश्रवणानन्तरं स्वापराधहेतुकं गमनं प्रियस्य ज्ञात्वा चित्तविक्षेपः स्यत्र वा पुनः
स्वस्थानस्थिता, स्वजीवनार्थं स्व स्व भावं प्रकटीकृतवत्य इति तादृग्भावरूपेण प्रकटः ।
'यदरोदीत्तद्रुद्रस्य रुद्रत्व'मिति श्रुतेः स्पष्टं रुद्रत्वम् । 'देवाः स्वधनमग्नौ निधाय संग्रामाय
यदा गता', तदाग्निस्तद् गृहीत्वा पलायितः, तदा देवा बलात्स्वकीयं धनमगृह्णन्, स तदा
'दुःखेनारोदी'दिति श्रुतानुव्याख्यानम् । प्रकृते चाद्येयं रसं स्व प्रभुः स्वामिनीभ्यो
दत्तवान् स्वभोगार्थम् । स्वामिन्यस्तु मानेन तस्मिन्नेव तं रसं निरुद्धवत्यः, तदा मानापहृते-
ऽतिदैन्यमाविष्कृतवत्य इति रुद्रत्वमुच्यते । यथा स सर्वनिरासकस्तथायं भावोऽखिल-
साधनसाधनत्वनिरासकः । यतः साधनचतुष्टयकृतावेतदनुदये भगवदनाविर्भावश्च, एत-
दुदये तत्सर्वनिरासः प्रभोराविर्भावश्च । 'कृषिर्भूवाचकः' इति वाक्यात्कृष्णशब्दवाच्यता
यद्यपि सदैवास्ति, तथाप्येतद्भावोदयानन्तरमुत्तरक्षणे यदि नाविर्भूयात् भक्तानां तदा देहा-
दिसत्तैव न स्यात् दैन्येनाशुपमर्दकभावेन प्राचीनसत्त्वनाशात् । अतः स्वयमाविर्भूय
स्वस्वरूपानन्दं स्मयमानं दं च तत्र स्थापयतीत्याविर्भूतस्य कृष्णत्वमिति । स्मयमानमुखाम्बुज
इत्यत्र, स्मयमानाभ्यां चेष्टि । न हेतादृशोऽयोऽस्ति यस्य एतादृशा भक्ता इति
स्मय । अत एवैताभ्यो मां प्रार्थयिष्यन्ति तदाऽस्माभ्यः अपि मद्भक्ताय रसं दास्ये,
स यथा तु मुक्तिमवति मान । अत एवाम्बुजमुक्तम् । तद्धि रविकिरणसम्बन्धादेव
विकसितं सरसं प्रकटयति । अतिप्रार्थनैवं तत्स्थानीयेति भावः । भक्तानां दोष इति ।

1 'कार्यं' इति नास्ति मूलपाठे ।

विचारे क्रियमाणे भगवद्रसपानानन्तरमेव ताद्दग्भावोत्पत्तेस्तस्यैव स, धर्म इति निश्चीयत इत्यर्थः। **अथवा व्यापिवैकुण्ठेत्यादि**। 'मयाऽपरोक्षं भजते'तिन्यायात् श्रीकृष्णस्त्वेतासामेव निकटे स्थितः। एवं सति 'तं विलोक्यागत'मिति यदागमनकथनम्, तेन येन रूपेण तत्रास्थितिः पूर्वम्, तेन रूपेणागमनमित्यवश्यं वाच्यम्, तत्र स्थितस्यैव आगमनासम्भवात्। अतो येन रूपेणागमनं, तद्रूपमुक्तं **व्यापिवैकुण्ठेत्यादिना**। व्यापिवैकुण्ठे हि पुरुषोत्तम एव, नांशः; व्रजे तु 'श्रयत इन्दिरे'ति वाक्याल्लक्ष्म्याः कदाचिदपि नावसरः। इदानीमेतन्मानापनोदनं तदार्तिनाशनं चैकदैव करिष्यन् लक्ष्म्या रमणं येन रूपेण करोति,तेन रूपेण,कृत्वा तत्स्वरूपस्य एतदभिन्नत्वात् तान् धर्मान् प्रकटीकृत्य,प्रकट,इत्याशयेनागमनमुक्तम्। एवं सत्येतेषां धर्माणां पूर्वमसत्वात् तद्विशिष्टस्यापि तथात्वात्तादृशस्यागमनमुक्तं भवतीति भावः। **ननु कन्दर्पेणेति।** **पूतनोक्तेरिदमाकूतं** ज्ञायते। पूतनया, हि परपक्षनिरासः क्रियते। दुःखिता तु सा न तं कर्तुं समर्था, किन्तु सुखिता। स्वामिनीभिरपि सर्वात्मभावविरुद्धा सर्वे भावा निरस्ताः।, तथा-च सर्वात्मभाववत्सु भक्तेषु दुःखसम्भवे मर्यादामार्गीया भक्ता अस्यस्मिन्मार्गे दुःखसम्भावनाद्दित्ताम्मोक्षादप्याधिक्यं न ज्ञास्यन्तीत्येतन्मार्गप्रवृत्तिर्न भविष्यतीति ज्ञात्वा कुतोऽतिरोधानं न कृतवानिति। तथा च कन्दर्पशब्दः सर्वात्मभावपर'। एतासां कामभावोपि सर्वात्मभावात्मक एवेति ज्ञापनाय कन्दर्पपदप्रयोगः। **स्वपूतना खिन्नेति**। भविष्यतीति शेषः। यद्वा। दैन्येनाविर्भूतो न तु हेत्वन्तरेणेतीममर्थं स्फुटं कर्तुमत्रापि लौकिकरीतिं जानतो भ्रान्तस्याशङ्कामनुवदन्ति **ननु कन्दर्पेणेत्यादिना**। साक्षादित्यनेनाद्यपक्षे समाधानमेवं ज्ञेयम्। अस्मिन्मार्गे मोक्षादाधिक्यज्ञानाभाव किं रसवार्ताभिज्ञस्यापाद्यते, उत तदनभिज्ञस्य। तत्रान्त्ये ओमिति ब्रूमः। आद्ये तु विवरणोक्ताध्यात्मिकमन्मथरसस्यैव यत्र विप्रयोगे महारसत्वमुच्यते तत्र तस्यापि तद्रूपस्य विप्रयोगे महारसत्वेन ज्ञाने का शङ्का नामेति द्वितीयपक्षसमाधानं विवरणे स्फुटम्।

**काचित्कराम्बुजमित्यत्र, पूर्वमनेकविधा अपीति**। अनाविर्भावे चित्तविक्षेपादनेकविधत्वं पूर्वाध्याय उपपादितं वचनरीत्या। अधुना तु प्रभुर्भग-
१०-२९-४. शब्दार्थं प्रकटीकृत्य स्वयमाविर्भूत इति ता अप्याविर्भूतस्वरूपैकनिष्ठा इति तदात्मिका जाता इत्यर्थः। एवं सति स्वरूपस्य रसात्मकत्वेन तद्धर्माणामपि तथात्वात् भ्रुकुटिबन्धनादिभावा अप्युपपद्यन्त इति भाव। **निर्गुणाश्च शिष्टा इति**। चकारात्समस्तसजातीयभाव उच्यते।

१०-२९-५. चन्दनरूपितमित्यत्र, **एवं सामग्रीत्यादि**। एतास्वनुग्रहविशेषो ज्ञापित इति भावः।

एका भ्रुकुटिमात्रध्येत्यत्र, तादृशभावस्येत्यादि । पूर्वं मानमात्रं निरूपितम्, अधुना तु शतधापि मानापनोदनार्थं यत्ने कृते मानमहं न त्यक्ष्यामीति[1]

१० २९ ६ गाढमानो निरूप्यते । तथा हि । कालविलम्बेन हि मानः शिथिलो भवति, व्यभिचारित्वेनाचिरस्थायित्वात् । तथा चायं मानस्तथा यथा न भवति । [2]गाढता तादृत्त्वैनास्य सार्वदिकी भवति । तथा कृतिरेव कालनियमनम् । प्रियरचनादिभिर्मानमवस्य त्यजनीति नायिकास्वभाव, स मा भवतु, मानस्वभाव एव मम तिष्ठत्विति प्रयत्नस्तन्नियमनं स्वभाव-नियमनं नान्येन भवतीति सम्भ उक्तः । मानस्य प्रियसंगमविलम्बहेतुत्वेन दुःखदत्वात् किमित्येवकरणमिति याशङ्क्यैतद्विचारानुदय तत्र हेतुत्वेन वक्तुमेतद्धेतुमाह विद्धेति मूले । पूर्वानुभूतसंगमसुखस्मरणे तल्लोभात् कदाचिन्मानत्यागः स्यादिति तदभावाय दंशः । एवम् यावद्देपि हृदि प्रियस्थितेरावश्यकत्वान्मानस्यापि तत्रैव सत्त्वात् कदाचिदस्य तस्मिन् लय स्याच्चेत्तदापि मानराहित्यं भवेदिति तदभावाय ज्ञाने कौटिल्यम् । निर्दोषभावे हि धर्मिणो मुक्तिः, तस्यातथात्वे त सम्बन्धात्र धर्मिणोपि न मुक्तिस्तत्र तस्य कथं सा भवेदिति भावः । प्रमाणनिराकरणार्थमिति । 'सर्वस्येशानः' 'य आत्मानमन्तरो यमयती'-त्यादिश्रुतिभ्य ईशितृत्वनियामकत्वादिधर्मवत आज्ञोल्लङ्घनं तदग्रे स्तब्धत्वादिकं प्रमुखान्तःकरणं मानाभिवर्तयितुं यतते, अन्तःकरणं च न निवर्तत इति प्रमाणविरुद्धत्वान्न सम्भवति, तच्च प्रमाणबलनिराकरणे सम्भवतीति तदननमेव कृतं भवतीत्यर्थः । यतो लौकिकी भक्तिरिति । लोकरीत्यनुसारी स्नेह इत्यर्थः ।

१० २९ ७ अपराऽनिमिषदित्यत्र, एषा हीत्यादि । गतदाघा विस्मृतपूर्वदुः-खेत्यर्थः ।

तं काचिन्नेत्ररन्ध्रेणेत्यत्र, पूर्वं लौकिकी वारभ्य दृष्टिभेदः स्यादित्यन्तम् । एका भ्रुकुटिमित्यनेन लौकिकस्वरूपभाववती निरूपिता । तद्यथा तथोपपादितम् ।

१० २९ ८ भक्तिमार्गे हि स्नेहवशाद् बहिर्मुखारविन्ददर्शने तेनैव विस्मृतसर्वा तदन्यत्रापेक्षते, सा त्वपरेत्यनेन निरूपिता । योगे हि ध्यानं प्रत्येकमङ्गं पृथक् चिन्त्यते, धारणायां तैः समुदितमेकत्वेन स्वरूपं चिन्त्यते । परस्परसम्बन्धास्मरणपूर्वकमेकाङ्गस्मरणस्यानुचितत्वेना पराधरूपत्वात् । प्रकृते तु स्वरूपस्य रसात्मकत्वेन भावात्मकत्वादेकैकस्यैवाङ्गस्य स्वामिनीमात्रविषयत्वे तत्र परस्परं भेदापत्तिः स्यात्, सा च अनेन भावेनापास्यते । इदमेवोक्तमन्यथा दृष्टिभेदः स्यादित्यनेन । दृष्टिकृतो भेदः स्वरूपे स्यादित्यर्थः ।

---

१ त्यक्ष्य इति मू. पा. । २ गाढतादृत्त्वैवास्य इति पाठः, गाढतास्त्वैव ... तु ...

न च विषयत्वेन स्वरूपस्य भावाद् भेदो वाच्य, एतन्नियमाभावात्, सर्वं ज्ञान प्रमेयमित्यादौ व्यभिचारात्। ईश्वरज्ञानस्य सर्वविषयकत्वेन स्वविषयकत्वस्यापि सर्व वादिसम्मतत्वेन प्रकृते च स्वयप्रकाशचिद्रूपत्वात् स्वरूपस्य न काप्यनुपपत्तिः। एतेषा भावाना व्यभिचारिभावत्वे तु न स्वरूपभेदकत्व स्यात्। स्थायिभावत्वेन तद्भेदकत्वमाव श्यकमिति तत्समाधानमावश्यकमिति भाव। **स्वकीयो वा भाग** इति। प्रभुरेताभ्य प्रत्येकमाविर्भूय रस ददातीति सर्वासा भागरूपो भवति। तथा च यद्धर्मविभूत यद्रूप तत् तस्या भागरूपमिति तथा। एतेन पितृधने पुत्राणामिव प्रभुस्वरूपे स्वामिनीनामेव स्वत्वमिति ज्ञापितं भवति।

**सर्वास्ता. केशवालोकेत्यत्र, क्षुद्रगुणक्षोभयुक्तानामिति** । एतासा भगवतश्च गुणाः सर्वे महा तः। परोक्षभजनस्याज्ञान क्षुद्रो गुण एतासामिति हृदयम्।

१०२९९ **मुक्ता एव ता** इत्यादि। तदात्यर्तित प्राणेन्द्रिया त करणजीवा भगवत्येव प्रविष्टास्त सम्ब धेन च परमान दं प्राप्तवन्त इति पुनर्बहिरनुसन्धान मेतादृशीनामसम्भावितमित्यर्थः। **एवमपीति**। एतास्तु न लौकिक्यो, नापि प्रसिद्ध-मुक्तिमार्गीया, किन्तु बहि प्रियसंगमामित्याप्तवत्य, भगवाश्च एतन्मनोरथं पूरयत्येवेति तथैव संपत्स्यत इत्यर्थं।

१०२९-१० **ताभिर्विधूतेत्यत्र, प्राकृतीनामिति**। प्राकृती व इत्यर्थः।

**श्रुतयो यथेत्यत्र, श्रुतयो हीत्यारभ्य युक्ति वेत्य तम्**। अत्राय भाव। श्रुतिष्वत्यर्थशद्वयम्। भगवत्स्वरूपानुभूति, अन्येषा स सम्पत्तौ साधनत्व च।

१०२९-१३ तत्र स्वशक्त्यैव चेत्तदनुभवो जातो भवेत्तदा 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति न वदेयु। भगवदनुग्रहेणानुभवैकनैव वाभावे श्रुतिना वाप्रूपवादेवं कथने[1] वदद्व्याघातश्च स्यात्[2]। अतः श्रुतीना पूर्वं तदप्राप्तिः, सतत तद्गुण-वर्णनेन तदनुग्रहात्पश्चादनुभवो भगवदान दस्येति तयोक्तिरिति[3] मन्तव्यम्। एतदेवोक्तं श्रुतयो जाता इत्य तेन प्र थेन। अपरञ्च। 'त त्वौपनिषदं पुरुष पृच्छामी'त्यादिश्रुति भ्योऽन्येषा भगवज्ज्ञान श्रयादिभिरेव भवतीति निश्चितम्। तच्च श्रुतीनां वाप्रूपत्वा द्यतो वाचो निवर्तन्त' इत्यादिश्रुतिभ्योऽसम्भावितम्। एव स युभयविरोधपरिहाराय श्रु युक्त[4] भगवद्धर्मश्रवणेन[5] तत्कृत्या च भगवदनुग्रहे भक्तौ जाताया स्वयमेव

१ वाङ्निवृत्तिकथन विद्वत्वकथने। २ तद्बोधकप्रमाणान्तराभाव न्। ३. श्रुत पौपत्या।
४ सर्वभावेन भजनम्। ५ यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद् भजति मां सर्वभावेन भारत॥

तदानन्दानुभवयोग्यता भवतीति वाच्यम् । तदेतदुक्तं **सर्वे** चेत्यारभ्य **युक्ति** चेत्यन्तेन ग्रन्थेन । एवं सति प्रवृत्तेऽशक्यद्वयगोचरतार्थमय इष्यते । तेन माधार्य्यवत्त्वेन निरूपितत्वेन वशीकृतेन प्रभुणा कृ वैतामा मनोरथान्तप्राप्तिः । अन्येषामपि कृतपुण्यपुञ्जानामेतदुक्तिश्रवण-कीर्तनादिना एतद्भावानुसारेण भजनेन च भगवदानन्दानुभावो भविष्यतीत्युक्तं भवतीति । ननु सर्वथा वागविषयत्वे त्वेव [1]कथनमपि न सम्भवति, अनेनैव प्रकारेण तथा[2]त्वस्य प्राप्ते । किञ्च । भगवदानन्दानुभवहेतुत्वेन हि गुणवर्णनं श्रुतौ न पूर्वमुक्तं तदप्येवं[3] बाधितं भवेत् । तथा सत्येव[4] निरूपणमपि बाधितम्, अतो निषेधमुखेनैव वागविषयत्वं, न विधिमुखेनेत्यस्याः श्रुतेस्तात्पर्यमिति[5] चेत् । तत्राहुः **श्रुतिश्च तत्प्रतिपादिकेत्यादि ।** [6]प्रतिपादनं हि तद्बोधकवाक्यकथनम्, [7]बोधश्च न शक्तिग्रहं विना । लोके तद्वाचकशब्दाप्रसिद्ध्या सोऽपि न सम्भवति, अतस्तदर्थबोधो भगवदिच्छयैवेत्यर्थः । अत एव भगवतोक्तं 'मतोऽस्मि लोके वेदे च प्रथितः' इति । मुक्तयुक्तेंद्रामाराय तवेच्छा । **यदप्युक्तं सर्वथा वागविषयत्वे** त्यादि, तत्राप्युच्यते । जीवानां सर्वपुरुषार्थसिद्ध्यर्थं हि भगवान् वेदमाविश्चकार । तत्र येन रूपेण[8] साधनात्मकेन य पुरुषार्थो यादृशाधिकारिणः सिध्यति, तद्रूपं त पुरुषार्थं तमधिकारिणं च श्रुतिर्निरूपितवती मोक्षपर्यन्तम् । एवं करणे सन्तुष्टो भगवान् यद्रूप प्रकटीकृत्य यमानन्दं दत्तवान्, तद्रूप स आनन्दश्च पूर्वं न ज्ञातो, अधुनापि मनोवागविषय इत्येतादृशमपि फलात्मकं वस्तु वर्ततीति ज्ञापनाय चाहु 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति । अत्र पूर्वार्धमानन्दस्य विशेषणम् । तथा चैतस्मात्पूर्वं 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवती'त्यादिना यद् भगवत्स्वरूपं निरूपितं, तत्सर्वं स्वभावैकलभ्यम्, न त्वन्यथेति ज्ञापयितुं सर्वात्मभावस्य निर्वचनमशक्यमिति तद्व्यञ्जक धर्ममाहोत्तरार्धेन । एतादृशमानन्दं यो विद्वान् ज्ञातवान् वा स कुतश्चन लोकाद्वेदात् किं बहुना परीक्षार्थं साक्षाद् भगवदुक्तोद्भवनान्मानादि-दशाया तदतिक्रमादपि न बिभेतीत्यर्थः । मोक्षसाधनस्य स्वकृतिसाध्यत्वेन तत्र श्रवणादीनि साधनान्युक्तानि, अत्र तु भगवदनुग्रहैकलभ्यत्वेन स्वकृत्यसाध्यत्वादनुवाद एव कृत इति । **स्वैरुत्तरीयै**रित्यस्याभासे, **आचारधर्मसम्बन्धा**दित्यादि । स्वामियो

---

१ निरूढं भगवद्वार्चे कथयन्ति, इति कथनम् । २ वार्गोचद्वारा भगवत्स्वरूपे बाधितत्वस्य । ३ भगवत्स्वरूपस्य सर्वथा वाङ्मनसाऽगोचरत्वे । ४ दृष्टान्ते मनोरथान्तप्राप्तिनिरूपणम् । ५ ननु पूर्वं सर्वथा वागविषयस्यानन्दस्योक्तिच्छया वागविषयत्वे । तथा च प्रतिमन्त्रे दृष्टान्त इति व्यवहाराय विरन्तव्यम्, न तु मनोरथान्तप्राप्तिं कथंचित् प्रकल्प्य तत्र दृष्टान्तादन्यत्र यत्नोद्यमः । ६. समाधानं व्यदुर्बाति । ७. वाक्यबोध । ८ साधनात्मकेन । ९. फलरूपवस्त्वनुभवाद पूर्वम् ।

हि सर्वांशे स्वसम्बन्धमेव प्रियस्यापेक्षन्ते, तद्भावसामान्यात्। प्रभुश्च तदर्थमेवाधुना प्रकट इति न तदन्यस्य तत्सम्बन्धयोग्यतापि। अत एवाग्रे वक्ष्यति कल्पितासन इतीति भावः।

स ईश्वर इत्यत्र, येषां जलक्रीडायामित्यादि। जलक्रीडानन्तरं येषामार्द्रता न तिष्ठतीत्यर्थः। योगेश्वरान्तर्हृदीत्यस्याभासे, अपवित्रेत्यादि। लोके वेदे
१०-२९-१४.
च पवित्रत्वेन यादृशं वस्तु नोपादेयं तादृशमप्येतत्सम्बन्धियोगेश्वरान्तर्हृदयादपि भगवत उपादेयं यत्र, तत्र लोकादिषूपादेयत्वेन प्रसिद्धं यादृशं तादृशस्य एतत्सम्बन्धिनो वस्तुनः का वार्तेति ज्ञापयितुमेवं कथनमिति ज्ञेयम्।

सभाजयित्वेत्यस्याभासे, स्वान्तःकरणदोषेत्यादि। दोषस्यैव विवरणं स्वकृ-
१०-२९-१५.
तघ्नतामित्यादिनोच्यते। परोक्षं भजता प्रभुणा तादृशो रसो दत्त इति तदज्ञानं स्वकृतघ्नता। प्रभौ दोषाभावात्तदारोप एव तत्र सम्भवति। स च गृह्यमाणस्य स्मर्यमाणस्य वा वस्तुनः सम्भवति। स्वामिनीनां तु प्रियातिरिक्तधर्मास्फूर्तिनियमेन स्वनिष्ठस्यैव एतस्यायमारोप इति भाव। यद्यप्ययमपि रसमध्यपात्येवेति न दोषत्वं वक्तुमुचितम्, तथापि भगवति दोषाभावस्य शास्त्रसिद्धत्वादारोपस्य च भ्रमत्वनियमाच्छास्त्ररीतिमवलम्ब्य तथोक्तम्। अग्रेऽपि दोषपदं यत्र तत्रेदमेव तात्पर्यं ज्ञेयम्। विभ्रमद्भ्रुवेत्यत्र, भ्रूर्यम इत्यादि। यमयति नियमयतीति यम, काल। तथा च कालविलम्बेन स भावः कदाचिन्नश्येतेति तदभावाय तस्यैव भावस्य नियमन सदा स्थितिं तादृशी भ्रूः करोतीति तथा। अथवा। फलस्यैव नियमनमत्राभिप्रेतम्। एतदेवाहुः यावत्प्रसादेति। तत्रैवानङ्गभाव एवाशेषस्वरूपानन्ददाता, नान्यत्रेत्यर्थः। ईषत्कुपिता इत्यत्र, साधनैर्निवर्तित इत्यत्रापि दोषपद पूर्ववज्ज्ञेयम्। काचित्कराम्बुजमित्यादिनोक्तस्वकृतकराम्बुजधारणादीनि साधनानि। ननु स्वरूपेणानिवर्तितो दोषो वचनेन कथं निवर्त्यते। तस्मात्तस्य दुर्बलत्वात्तदुपपादितमाद्येऽध्याय इति चेत्। अत्राय भाव। 'रसो वै स' इत्यादिश्रुतिभिर्भावात्मको हि भगवान्। स चाधुना दोषात्मको, रसस्वरूपस्यैव तथात्वात्। स्वामिनीभावाविर्भावमूलकारण वेणुनादात्मकः शब्दः इति निर्दोषपूर्णगुणरूपभावाविर्भावोऽपि वाग्रूपशब्देन भविष्यतीति किमनुपपन्नम्। किञ्च। यथा वीक्षणेन यो रसः स न स्पर्शादिना। सम्भाषणेन च य, स नेक्षणादिनेति तत्तद्रसस्वभावः। तथात्मांस्त्यक्त्वा गतः कथमिति भावस्तादृग्वचनैरेवेति शिशिरय निजहृदयम्। आद्येऽध्यायेऽप्येवमेव ज्ञेयम्। अत सुष्ठूक्तं साधनैर्निवर्तित इत्यादि। ननु भजनाभजननिर्णयस्य प्रभुविषयकत्वयोदेश्ये सति साधारण्येन प्रश्ने को हेतुरिति चेत्, उच्यते। भगवद्विषयकप्रश्नस्यैवाद्रा क्रियमाणे

वयमेतादृश्यो भक्तास्त्वमेतादृशीरस्मान्कथं त्यजसीति हि प्रश्नः स्यात् । स च नायिकोत्तमानां स्वोत्तमानामग्रे भगवता स्तुत्यानां स्वामिनीनां मुखान्मुखात्र निःसर्तुमर्हति, किन्तु ग्राम्याणां रसाभासयुक्तानामेव स्यात् । न हि विकचशारदसरोरुहात् तिन्तिणीरसस्पन्दः सम्भवति । अतो व्याजेन प्रश्ने भावगोपनेन महारस इति मुख्यरसरसामान्यादेव तथोक्तिरिति बुध्यस्व । भगवांस्तु जीवेभ्यः स्वस्य वैलक्षण्यं वक्तुं तत्स्वरूपज्ञानं विना ततो वैलक्षण्यं ज्ञातं न भविष्यतीति तत्स्वरूपमुक्त्वा स्वस्वरूपमुक्तवान् । अन्यथा स्वामिनीतात्पर्यविषयः स्वयमेवेति तान्न निरूपयेत् ।

भजतोऽनुभजन्त्येक इत्यत्र, तेषां त्रयाणामित्यादि । भजनानुसारेण भजनकर्ता
१०-२९-१६. प्रथमः, अभजतो भजनकर्ता द्वितीयः, उभयाभजनकर्ता तृतीयः । द्वितीयो यमभजन्तं भजते स एकः प्रतियोगी । तृतीयो यं भजन्तं न भजते स द्वितीयः प्रतियोगीति ज्ञेयम् ।

भजन्त्यभजतो ये वा इत्यत्र, धर्मशेषश्चेत्यादि । धर्मार्थं यो भजते तस्य
१०-२९-१८. धर्म एव मुख्य इति भजनीयस्तच्छेषः । एवं सति भजनकर्तुः पातकादिसम्भवे तद्दोषो निवर्तनीय एव, कृतघ्नतापरिहाराय इत्यर्थः । ननु पुण्येनैव पापनिवृत्तिरित्यस्य तत्र नोपयोग इत्यत आहुः तदीय एवेति । धर्मशेषीय एव धर्मो भजनद्वारा भक्तेषु गच्छतीत्यर्थः । ननु विहितत्वात्तद्भजनस्यापूर्व एव धर्मस्तेनोत्पद्यत इति चेत् । मैवम् । तादृक्फलसाधकत्वेन तद्भजनविधाने भजनीयनिष्ठताद्दृग्धर्मस्यैव प्रयोजकत्वात्, 'तेजस्कामोऽग्निमेव तेजस्वन्तं स्वेन भागधेयेनोपधावती'त्यादिश्रुतिभ्यस्तथा निर्णयात् । अन्यथा तेजस्वन्तमिति न वदेत् । न चामूर्तत्वं बाधकमिति वाच्यम्, अलौकिकस्यार्थस्य लौकिक्या निर्णेतुमयुक्तत्वात् । 'अलौकिकास्तु ये भावा न तांस्तर्केण योजये'दिति श्रुतेश्चेति दिक् । निषेधस्य प्राप्तिपूर्वकत्वनियमेनात्र चापवादनिषेधोक्तेर्यत्र धर्मापवादसम्भावना स एवात्र धर्मः परिगृहीतः, यत्र न तत्सम्भावना न सोऽत्र विवक्षित इत्याशयेनाहुः तत्र धर्मे यत्रेत्यादि । नित्यं कर्म कर्तव्यत्वेनैव यत्र क्रियते तत्र तदेव प्रधानम् । यत्र देवताराधनेनैव धर्मस्तत्र सा प्रधानम् । न चोक्तेषु धर्माभावादविवक्षितत्वमिति वाच्यम् । भगवता हि निर्णयः क्रियते । स च सन्दिग्धे कर्तुमुचितः, उक्तेषु सन्देहाभावादत्राविवक्षितत्वात् ।

भजतोपि न वै केचिदित्यत्र, ये दयाधर्माधिकारिण इत्यादि । धर्मार्थं
१०-२९-१९. भजत्सु धर्मं सम्पादयितुमधिकारिणः समर्थास्तान् ये न भजन्ति ते त्वधमा इत्यर्थः । अकृतज्ञत्वादिदोषवत्त्वेन त एवाग्रे वाच्याः । लौकिकमेव निमित्तं

भजने येषां ते लौकिकनिमित्तास्तान् ये न भजन्ति ते उत्तमा इत्याहुः ये लौकिकनिमित्ता इति । त एव आत्मारामत्वादिधर्मवत्त्वेनाग्रे वाच्याः ।

न पारयेहमित्यस्याभासे, भक्तिमार्गविरोधमित्यादि । ननु 'नाहं तु सख्य' इत्यादिना साधनमार्गीयभक्तविषयकमभजनमुक्तम्, प्रकृते च परोक्ष-
१०-२९-२१. भजनमुक्तम्, अनुवृत्तिवृत्त्यर्थं परोक्षभजने च हेतुत्वेनैवं मदर्थेत्याद्युक्तम् । तथा चैतद्भजनानुरूपमेव स्वभजनमुचितम्, न तु कामपि मर्यादां स्थापयित्वा । तथा सति भक्तिमार्गविरोधापत्तिः । एतादृशीनां दुःखदर्शनमपि स्वस्य तद्विरुद्धमिति प्राह उच्यते । अत्र स्वामिनीभजनानुरूपं न भजनमिति हि तत्राशङ्का । तत्तु प्रावाहिकधर्मरूपम् । एतदेव भगवताप्युक्तं मद्धत्तयत्फलार्थिनो यादृशं भजनं तत्फलं दत्त्वा ततो विमुच्य[1] इत्याशयेन 'ये यथा मा'मित्यादि । अत्र यथातथेति पदाभ्यां भजनप्रकारयोरप्येकरूपत्वमुच्यते । प्रकृते च दास्यं प्रकारः । स च भक्तधर्म एव, नत्वीश्वरे सम्भवति । कदाचित्क्रियमाण-मप्यनुकरणवद् भवति । न हि महाराजः कदाचित्संतोषेण स्वसेवकाङ्गमर्दनं कुर्वन् दासो भवति । तथा प्रकृतेपि रसवशात् मानिनीपदपद्मपरागानुरागं कुर्वन्नपि पतिरेव, न त्वन्यथा भवतीति क प्रत्युपकृतिसम्भवो भजनानुरूपं भजनं वा । एवं सति प्रत्युपकृत्यपेक्षया तदभावेन दोषारोपो न कार्यः, अशक्यत्वादित्युक्तं भवति । नन्वेवं सति सुतरां परोक्षभजनमनु-पपन्नम् । न ह्यप्रत्युपकार्यभजनासु दुःखहेतुकृतिः सम्भवतीति चेत् । अत्र ब्रूमः । रसात्मकः प्रभुरित्यविवादम् । स च संयोगविप्रयोगभेदेन द्विविधः । तत्रान्यतराभावे त्वसम्पूर्ण एव सः स्यात्, अतः सम्पूर्णं रसं दत्त्वा तदुत्तरकालीनदोषारोपात्मकव्यभिचारिभावोत्पत्तौ सच्छान्तिर्वचनैः कृता, तस्याग्रिमरसानुभवविरोधित्वादिति न किञ्चिदनुपपन्नम् । एतेनैतादृशीषु दुःखदर्शनं स्वस्य भक्तिमार्गविरुद्धमित्यपि निरस्तम् । एवं सतीश्वरत्वमेवाशक्तौ हेतुरित्याशयेन प्रभुराहेत्याहुः भक्तिमार्गविरोधं परिहर्तुमिति । नन्वेतेन स्वस्येश्वरत्वमेवोक्तं भवति, न त्वेतत्स्तुतिरिति चेत् । अत्रायं भावः । यद्यपीश्वरत्वेनोक्तरीत्या प्रत्युपकारकरणं न सम्भवत्येव, तथापि तर्किनमुच्यते, यदि कथञ्चिन्मयि दास्यमापद्येत, तथापि निरन्तरं दास्यकरणेपि कदाप्यनृणो न भवामीति प्रभुणा निरवद्युत्कर्षे उक्त इति का वाच्या स्तुतिरेतदग्रे । अन्यथा 'विबुधायुषापी'ति न वदेत्, 'स्वसाधुकृत्यं न पारये' इत्येतावतैव चारितार्थ्यात् । नन्विदमितरभक्तसाधारणमिव भाति । तथा हि । चतुर्वर्गार्थिषु तदानस्य प्रत्युपकृतिरूपत्वेपि प्राप्तात्यन्तिकभक्तियोगेषु सेवातिरिक्तानपेक्षणात्तस्याश्च स्वतन्त्रपुरुषार्थत्वात्कि वा प्रत्युपकृतित्वं

[1] विमुच्यते मू. पा. ।

द्वितीयमीश्वर कर्तुं समर्थ । अत एव प्रभुणोक्तं 'न शक्य तेऽनुसंख्यातुमनन्तत्वान्मयापि हो'ति, तथा प्रकृतेपि केवलभावस्य रसात्मकत्वेन भगवदात्मकत्वात्तदनुरूपस्वभावादशक्तिरेव निष्प्रत्यूहेति मन्तव्यम्, अन्यथा ईश्वरत्वमेव न स्यात्, श्रुत्युक्तरूपाभावादिति बुध्यस्व। वैपरीत्यापत्तिरिति दूषण यदुक्तम्, तत्रोच्यते । कर्मज्ञाने साधनमार्गीयभक्तिं च जीवार्थं कृतवान् भगवान्, फलमार्गीयभक्तिमार्गं तु स्वार्थमाविश्चकार। अन्यथा रसात्मकस्वस्वरूपानन्दानुभवो न स्यात्, 'तस्मादेकाकी न रमते' इति श्रुते । तथा च भावदानादेरपि स्वार्थत्वान्नोक्तदूषणम्। नन्वेवमपि 'न पारये' इति नोपपन्नमिति चेत्। न, अस्यानन्दस्य स्वरूपात्मकत्वेप्येताभ्य एव तदनुभवादनुभूतस्य च वस्तुन एवैतादृशत्वेनैवं कथनस्य तत्स्वरूपनिरूपकत्वात्। यथा 'विस्मापनं स्वस्य च सौभगर्द्धे'रित्यत्र वस्तुस्वरूपनिरूपणम्, तथात्रापीति सर्वमनवद्यम् । अत्र पूर्वार्धेनैवैतत्स्तुतिसंपत्तावप्युत्तरार्धकथनस्य तात्पर्यमाहुः **अतो मयी**त्यादिना। अत्रोपकृतेरेव प्रत्युपकृतिरूपत्वोक्त्या तदभिन्नतदपेक्षायां सोपाधिभजनं कार्यं भवति, तथा च भजन एव तत्सम्भवात् । एतदेवोक्तं **नो चे**दित्यनेन । तच्च भवतीष्वसम्भावितमशक्यत्वादित्याहुः **न ह्यशक्य**मित्यनेन। प्रत्युपकृत्यशक्तावपि भगवन्निष्ठोपि हेतुरिति ज्ञेयम्। इत्येकोनत्रिंशोऽध्यायः॥

त्रिंशत्तमाध्यायार्थकथने, **त्रिंशत्तमे हरि**रित्यादि । इतिशब्दो हेतुवाची। **लीलां चक्रे** इति। लोके प्रकटामिति शेषः । तथा सत्ययं वाक्यार्थ ।
१०-३०० यद्यप्यतिगोप्यत्वादिय लीला न वक्तुमुचिता, तथापि प्रभुर्लोके प्रकटा लीला चक्र इति हेतोरीर्यत इति, अन्यथा रासलीलेर्यत इत्येव वदेयु । सा च 'यथा मदच्युद् द्विरदः करेणुभि'रित्यन्तेन ग्रन्थेनोक्ता । एतदभेतिदेशेन कामशास्त्रोक्तरीत्यापि सेवितेत्याहु **कामकृतामपी**ति । इन्द्रो विषयभोगेऽभियुक्त इति तन्नामग्रहणम्। वस्तुतस्तु ब्रह्मादीनामपि दुर्लभैव। कामकृता सा हि लोकानुसारिणी भवति । एवं सति यत्र सापीन्द्रादिदुर्लभा, तत्र पूर्वोक्तलीलायास्तथात्वे किं वाच्यमिति भावः । लीलोक्तिप्रस्तावे फलश्रुतिसंगतेत्याशङ्क्य तत्तात्पर्यमाहुः **अस्या इति** । लोके कामकथा तदुद्बोधिका दृष्टेति तच्छङ्कया वैराग्यार्थी कदाचिन्न शृणुयात्, तथा भक्त्यर्थ्यपि, मातृणा रहस्यवार्ता न श्रोतुमुचिता, तथा सति चित्तवैपरीत्यमहादोषः स्यादिति शङ्कया, न शृणुयात्। एव सति विपर्ययेवावशिष्यते। तथा सति तु हीनाधिकारिविषयत्वेनोत्तमत्व न स्यादित्येतत्सर्वपरिहाराय फलश्रुतिरित्यर्थः । विषयिण पूर्वं विषयत्वेन श्रवणेपि तत्स्वभावादेव दोषनिवृत्तिपूर्वकं परमपुरुषार्थप्राप्तिरिति भाव । अन्ते प्रश्नोत्तरयोस्तात्पर्यमाहुः **लौकि-कपपी**ति। सर्वथा प्रपन्ना दृष्ट्वाऽदेयमपि स्वरूपानन्द दत्तवानिति तु वस्तुस्थिति ।

विरुद्धत्वज्ञान एवेत्यर्थः । प्रकृते भगवद्वचनानुभावात्पूर्वसान्निध्यानुभवोऽधुना सम्पन्न इति नानुभवविरोधोऽतो न सन्देह इति भावः ।

**गोपिमण्डलमण्डित** इत्यत्र, **उत्तरोत्तरेति** । उत्तरोत्तरक्षणसम्बन्धिभिरित्यर्थः ।
१०-३०-३. **पूर्वपूर्वेति** । पूर्वपूर्वक्षणसम्बन्धीत्यर्थः ।

**जगुर्गन्धर्वपतय** इत्यत्र, **अन्यथा भगवद्धस्तेत्यादि** । अत्रायं भावः ।
१०-३०-९. यथा भगवल्लीलामात्रोपयोगिनो नटा इव विधावमुप्रभृतयः, तथा भगवद्धस्तदनादिमात्रोपयोगिक्रियाशक्तिमन्त इन्द्रादयो दिक्पालेभ्यो भिन्नाः सन्ति, ते त्वेतद्भुजदण्डमात्रावलम्बाः, तयो रसरूपत्वेन रसात्मकक्रियाशक्तिप्रधानानामेव तत्र स्थितेरुचितत्वात् । अत सुष्ठूक्तं भगवद्धस्तेत्यादि ।

**काचित्समं मुकुन्देनेत्यस्याभासः** । **उत्पन्नस्य नादस्येत्यादि** । अत्रायं
१०-३०-१०. भावः । अयं नादो न लौकिकः, पूर्वसिद्धो वा, किन्त्वलौकिकोऽपूर्वः । स च भगवतोऽन्यभावनिवृत्तिपूर्वकं स्वमात्रविषयकभावोत्पत्त्यर्थं प्रत्येकं कृतः । अयं च स्वामिनीनामप्युक्तभावानुरूपभगवद्विषयकभावविशेषोत्पत्तौ रसानुभावको भवति । मूलकारणत्वात्स्वामिनीनामस्य तथात्वम् । इदमेवामृतमपात्वम् । सा च भगवन्नादेनेति तथा कृत । अपरञ्च । स्वामिन्याः स्वरजात्युन्नयने प्राधान्योक्त्या प्रभोरन्नसहभावोक्त्या ततः सकाशादस्य माधुर्यं लभ्यते । अन्यथा प्रभोस्तारनादेनास्याभिभवे रसाभास एतद्वैयर्थ्यं च स्यात् । साम्ये तूभयोः स्वातन्त्र्येण करणात्परस्परानानुगुणत्वेन च मिथो रसानुपयोगित्वप्रसंगः । स्वयं नादस्वरूपमज्ञात्वा भगवन्नादं श्रुत्वा[1] तत्स्वरूपनादकरणेपि तथा । अतो भगवद्विनारितानुपूर्वी स्वयं ज्ञात्वा तथैवोन्नीतवतीति ज्ञेयम् । पूर्णरसोदयो भगवति जात इत्यपि ज्ञापनाय तदधीनत्वमपि ज्ञापयितुमेवं कथनम्, नाधिक्यप्राधान्यस्य एतद्रसस्वभावरूपत्वात् । एवं सति तारनादसाम्यजगत्पूर्णं मधुरेण न भवति । अन्यधर्मनिवृत्तौ ह्येतेन पूर्णं भवति । तदर्थमेतत्स्वरूपे रसाभिज्ञा निरूपिकाथैता एवेति । यथा 'तं त्वौपनिषदं पुरुष'मिति श्रुतेस्तदुक्तमेव परस्वरूपम्, तथैतन्निरूपितधर्मवदेव पुरुषोत्तमस्वरूपम्, नान्यधर्मविशिष्टमित्येतदात्मरूपोपनिषद्रूपस्वरूपवादेतद्रूपवत्वेन भगवति प्राकृतधर्मराहित्यज्ञानं स्वस्मिंश्च तत्सम्बन्धिनोनान्यधर्मराहित्यं तज्ज्ञानं च भवति । तदनन्तरं भगवदानन्दानुभवो भवति । एतत्प्रभुगानकार्यम् । एवं सत्येतेन जगत्पूर्णं भवत्येवेति सर्वमवदातम् ।

---

१. तच्छ्रुत्वा-मु पा. ।

**गायन्त्यस्तं विजह्रिर** इत्यत्र, इयं क्रिया शक्तिरूपेति । शक्तिरूपा भग-
१०-३०-१५. वत्सामर्थ्यरूपेत्यर्थः । तस्मिन्सति स्वातन्त्र्यमुचितमिति भावः ।

उपक्रमात्प्राक्षेपि नृत्ये यत्पुनर्वाचोक्तिपूर्वकं नृत्यकथनं तत्कञ्चन विशेषमाश्रित्येति
१०-३०-१६. तमाहुः **अतः परं राधादामोदरवदिति** । अथवा रसावेशजनिता
मर्यादारहिता क्रिया विहार इति तदुक्त्योत्तरस्यादिना पूर्वस्यावसानमिति
न्यायवत् पूर्वनृत्यविरामो ज्ञाप्यते । तथा सति पुनर्नृत्योक्तिरुचिता । तच्चेत्पूर्ववदेव
स्यात्तदा तत्यागो न स्यात् । रसार्थमेव तत्करणात्तदुदयं विना तत्यागासम्भवात् । एवं
सत्यपूर्वरसार्थमेवापूर्वमेव नृत्यमथोच्यत इति ज्ञायते । तदेवाहुरतः **परमित्यादिना** ।
**कर्णोत्पलालकेत्यत्र, स्वतो** चेत्यादि । श्रमाभावज्ञापकधर्मोक्थनेन रसावेशादे-
वैतदपि नृत्यं जायत इति तस्मिन्भवति सति स्वत एव पूर्वविहारवृत्तिर्जातेति सूच्यत
इत्यर्थः । अथवा । क्रीडाया अनिवृत्तिः क्रीडानिवृत्तिः । श्रमाभावसूचनेन पूर्वक्रीडाया
निवृत्तिर्न स्वामिनीनामशक्त्येति सूच्यत इत्यर्थः । **गोप्य** इति । **भगवत एवेत्यादि** ।
भगवत्साम्येन नृत्यकृतिर्न पूर्वशिक्षया गोपजातीयानां, तत्रापि कुलवधूनां, तदसम्भवात्,
किन्तु तथा रसाविर्भावो येन तथा नृत्यं स्वत एवाभूदिति ज्ञापनायेत्यर्थः ।

**रेमे रमेश** इत्यस्याभासे, **ननु प्राकृतीभिरित्यादि** । अत्राप्राकृतत्वं निरूपयितुं
१०-३०-१७. तद्विपरीतधर्मोक्तिः पूर्वपक्षे । सिद्धान्तस्तु ब्रह्मानन्दरूपत्वेनाप्राकृती रमा ।
भगवांस्तु तदीशत्वेनाप्राकृतीरमणैकस्वभावः, तेनात्र रमणोक्त्यैवाप्राकृती-
त्वमप्युक्तमेव भवतीति भावः । किञ्च । स्वामिनीनामप्राकृतत्वे का नाम शङ्का, यत एत-
त्सम्बन्धद्वारैव रमापि प्रभुसम्बन्धं प्राप्तवती, नान्यथेत्याहुः **रमापि भगवदाज्ञयेत्यादि** ।
तदुक्तं 'श्रयत इन्दिरे'त्यादि । तथा च स्वामिनीषु प्रभोः स्नेहभरदर्शनेन स्वयं तत्र प्रविश्य
तद्द्वारा प्रभुसम्बन्धं प्राप्तुमिच्छन्त्यपि तन्महत्त्वस्फूर्त्या स्वयं न प्राविशत्, किन्तु तदार्तिं
दृष्ट्वा तन्निवृत्त्यर्थं प्रभुणाज्ञापिता तथाकरोदिति ज्ञापनायोक्तं **भगवदाज्ञयेति** । अपरञ्च ।
यदा नागरीवदस्मदतिरिक्तायाः प्रभुसम्बन्धो मा भवत्विति चित्तकौटिल्यं स्यात, तदा रमा
न तथा कर्तुं शक्नुयात्, एतास्तु सर्वथाङ्गीकृतव्रजसम्बन्धिन्य इत्यतिसौजन्यादिगुणवत्य
इति सुखाराध्या इति रमायास्तथाकरणमित्याशयेनाहुस्ता **अप्यधिष्ठानयोग्या इत्याहेति** ।
नन्वेतद्रसप्राप्त्यर्थं ह्येतदाज्ञापनम् । सा चोभयोरपि दम्पतिस्वभावस्य ज्ञातृत्वेनारा-
संभाविता । एवं सति प्रियस्यापि पूर्वभावविलक्षणभावो पत्न्या रमागमप्रसंगेन पूर्वरसस्यापि
भञ्जिकेयमाज्ञा, स्वौध.स्पर्शमप्यसहमाना शिशवस्तमपि क्षीरं नीरं पाययन्तो गौरिव-
अतस्तत्सम्पादनमनुचितम् । किञ्च । ब्रह्मभावे हि ब्रह्मानन्दाविर्भावो, रमा चैतद्रूपा ।

स्वामिन्यस्तु ततोऽधिकभगवद्रसभाववत्योऽतस्तत्सम्बन्धोऽत्राशक्यवचनं इत्याहुर्नन्वेतदप्यनुचितमित्यादिना । अत्रार्भकदृष्टान्तेन समाहितेरयमाशयः । यदुक्तं रमावेशे रसाभासप्रसंगः पूर्वरसविच्छेदश्चेति, तत्रोच्यते । यथा स्वप्रतिबिम्बं पश्यन् बालो दर्पणादौ गृहादिप्रतिबिम्बे सत्यपि स्वप्रतिबिम्ब एव रमते, न तु तदन्यस्मिन्, अत एव मूले स्वपदोपादानम्; तथा स्वामिनीषु रमासमागमेपि स्वस्य रसरूपत्वेन तदात्मकान् भावान्यत्र दृष्टवांस्तत्रैव तदनुरूपभावचेष्टावानेव रेमे, न तु रमास्फूर्तिरपि, येन भावान्तरज्ञानेन पूर्वरसविच्छेदः स्यात् । तस्य रसस्य तादृक्स्वभावत्वादेव तथात्वं प्रभोः । अर्भकस्य स्वभावस्य तथात्वात्तस्यैव । रमायास्तु भगवति भर्तृभाववत्त्वेन न मुख्यरसप्राप्तिः, अत एव 'नायं श्रियोङ्ग उ नितान्तरते'रिति श्रीमदुद्धववचनम् । किन्तूक्तभावविशिष्टप्रियाङ्गसंगित्वेना-ङ्गनाङ्गसंगित्वेनैव पूर्वमननुभूतजातीयः कश्चनानन्दविशेषः समजनि, येन सर्वविस्मृतिरभूत् । एतेनैव रमाप्रवेशे स्वामिनीनां भाववैलक्षण्येन पूर्वरसविच्छेद इति निरस्तम् । नहि प्रतिबिम्बाश्रयगन्धज्ञानं लोके क्वचिद्दृष्टचरम् । ज्ञानस्यात्मधर्मत्वेन तत्र तदसम्भवात् । अपि च । स्वामिनीनां प्रभोश्च तज्ज्ञानेपि न काचित् क्षतिः । यतो रसाभासभावाभासैर्मुख्यो रसः पोष्यते । प्रकृते च तदावेशात् क्षणमात्रं तथाभावोऽग्रिमक्षणजायमानरसविशेषानुभावक इतीष्ट एव । अतः प्रस्तुतस्वौधोभारधाराभरेण शिवयस्थभाग्डान्यत्यतिशयेन पूरयन्त्यदमुना गौरिवेयमार्षे युक्ततरा ।

यच्चोक्तं भक्तभावभोगात् तदानन्दरूपाया रमायाः सम्बन्धोनुपपन्न इति तत्रोच्यते । न हि भक्तभावात्मकभावधर्मेनाविर्भवद्ब्रह्मानन्दो रमा, तस्य तद्विशिष्टेषु पुरुषेष्वप्याविर्भावात्, अस्याः पुरुषोत्तमैकनिष्ठत्वात्, किन्तु पुरुषोत्तमस्य रसात्मकत्वेन स यादृग्विधस्तादृग्विधोयं निरूपणीयः । तथा च स्निग्धदम्पतीभावोऽप्येकस्तत्प्रकार इति तदात्मकानन्दप्रकाशिका । 'अर्धो वा एष आत्मनो यत्पत्नी'ति श्रुते स्वयमपि तदर्धत्वेनानन्दरूपा । अतः पुरुषोत्तमस्य या शक्तिः सा रमा ब्रह्मानन्दशब्देनोच्यते । तथा च एतादृश्याः सम्बन्धयोग्यतास्तीत्यत्र प्रवेश उपपद्यत इति । स्वामिनीनां प्रभोश्च रसानुसन्धानपक्षमाश्रित्य 'बालको ही'त्यारभ्य 'यथार्भक' इत्यन्तो ग्रन्थ उक्तः । अनुसन्धानपक्षमाश्रित्य प्रमोदेत्यादिः । अत्र प्रमदपदेनोद्दीपकानुभावकत्वात्कृतनिमित्तविभावितो व्यभिचारिभावपुष्टो मुख्यो रस उच्यते । अविकृतो नित्योऽयं रस इति ज्ञापनाय मत्तपदोपादानम् । ब्रह्मानन्दपदेन पूर्वोक्तो मुख्यरसपोषको रमावेशजनितो भावविशेष उच्यते ।

ननु रसमामर्थ्यादिस्थापनेनैव चेद्रमणम्, तदा कुत्र उत्तमनायिकाचाप्रास्त्या स्वामिनीषु भगवतश्च रसमामर्थ्यादियोजनयासंगेनोत्तमरसाननुभवप्रसंग इत्यरुच्या पक्षान्तरं

